उक्तो मयोङ्गाभिनयो यथावत् शाखाकृतो यश्च कृतोऽङ्गहारैः[1] ।
पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥८६॥

[2]इति भरतीये नाट्यशास्त्रे करयुक्तिधर्मीव्यञ्जको नाम त्रयोदशोऽध्यायः ।

अङ्गाभिनयः समाप्तः ।

---

हास्यादौ एव यद्यपि वाक्याभिनय उक्तस्तथापि सति उक्तस्वरूपमभिनेयमिति तदाह यथावदिति, अत एव पुनरुक्तम् । स्वरा अच । व्यञ्जनानि हल । वर्णा अज्झल्समुदाया इति शिवम् ।८६।

श्रीभानुमण्डलनरेश्वरपादपद्मकिञ्जल्कपूगपरिपूतशिरोरुहेण ।
वृत्तिः कृताभिनवगुप्तपदाभिधेन कक्ष्याङ्कविभ्रमनलक्षणवर्णनेऽस्मिन् ॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचितायां नाट्यवेदविवृतावभिनवभारत्यां कक्ष्याप्रवृत्तिधर्म्यभिधानं (धर्मीव्यञ्जको) नाम त्रयोदशोऽध्यायः ।



---

१. NS. अङ्गहारः ।
२. KSS. इति भारतीयनाट्यशास्त्रे प्रवृत्तिधर्मव्यञ्जको नाम चतुर्दशोऽध्यायः ।

## अभिनवभारती

न च न भवति शृंगारशब्दात्तत्प्रतीतिः शृङ्गारहास्येति (६-१६) श्लोकस्य काकवाचित देशीयतापत्ते। यथामवेत हि शब्दात्प्रवर्तमानासिद्ध साध्य चाभिधातु केन प्रतिहन्यत इति साध्यमानता कापि विभीषिका। किंचेदमपि शृङ्गारायते हसति करुणायते इत्यादि साध्यशब्दशब्दनीयत्व प्रति किं वक्तव्य स्यात्, अवश्य चैतत्, अन्यथा "याते द्वारवती" इत्यादौ सोत्कण्ठयेति, उत्कमिति चानुवादो विफल एव स्यात्, तद्रूपास्पर्शे तदनुभावसमार्पणस्याप्ययोगात्। स्थायिव्यभिचारिणा च भेदाप्रतीतौ—

> यान्त्या तया वलितकन्धरमाननं त—
> दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
> दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
> गाढं निखात इव मे हृदये कटाक्षः॥

इत्यादावनुभावप्रत्ययोऽपि दुर्लभीभवेत् का कथा रसस्य, वलितावृत्तादिघाननखानादीना कटाक्षशब्दे जीवभूताना क्रियासु प्रतिपत्तेरभावात्। "लीनेव प्रतिबिम्बितेव लिखितेव" इत्यादावेषैव वार्ता।

"तया महामरभसव्यावृत्तकण्ठग्रह" "वपुरलसलसद्वाहु लक्ष्म्या" "कतिचिदहानि वपुरभूत्केवलमलंकरणं तस्याः" ॥

> रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
> पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।
> तच्चेतसा स्मरति नूनमबोधपूर्वं
> भावस्थिराणि जननान्तरसौहृदानि॥

"निद्रानिमीलितदृशो मदमन्थराया" "विवृण्वती शैलसुतापि भावमङ्गैः" इत्यादि काव्येषु सहृदयहृदयसागरसमुच्छलच्चन्द्रकामृगाङ्कप्रतिबिम्बेषु जीवितभूताना हासालस्यौत्सुक्यनिद्रामदागमाभिलाषागमादीना शब्दस्पृष्टत्वेन विभावाद्यनुसाध्यस्वभावेषु वीतरागतेव यथावत्प्रीतताऽवस्तत्वैव स्यात्। सिद्धस्वभावानामेव पदैरभिधानम्। तत्र भवतमिति तदनुभवनीतिवत्साध्यस्वभावतेति चेत्, अन्यतरधर्ममुखेन क्रियान्यस्य धर्मिणो द्वाभ्यामपि यथासङ्केतस्पर्शाद् द्वितीयधर्मास्पर्शस्योभयोरपि तुल्यत्वात्। साध्यतार्थ क्रियाया जीवितमिति चेत्, धर्मद्वयवति धर्मिणि क एषोऽन्यतरधर्मपक्षपात.। न च सिद्धताधर्मोऽस्या नास्ति; तथात्वे वा कदाचिदपि भूतदर्शनं न स्यात्। भवतमिति वारोपितगौणीप्रतिपत्तिः स्यात्।

अपि च तादारोपस्थानस्य चातीतस्यैव केनापि शब्देनास्पृष्टत्वात् तस्मात्सिद्धाभिधायिना वा शृङ्गारादिशब्देन स्पृश्यत एव तदर्थः। न तु सर्वो वक्ता सर्वविन्यतिप्रसक्तिलक्षणप्रबन्धचतुरकाव्यनिर्माता च हि कविरद, न किन्त्वस्ति प्रतिपादकत्वम्।

अभिनवभारती

वक्षस्तु क्षतमहो यद् वेपते क्लीवितम्' इति—अत्र रौद्रे भोक्ष्यतीति हृद्यम्। अत्र 'लोचने कदा समार्जिष्यति' इति, न तु कदा समार्जयतीति, एवं वैकल्पिकेऽपि आगमे सौन्दर्यात्। अभावपक्षे वा "आच्छिद्य प्रियत इति सुव्यक्तमेव। एकान्तस्मनीतिनदचेति घुटोऽस्त्वपक्ष एव। आगमेनादेशोऽप्युपलक्ष्यते। मुग्धाशब्दस्थाने न मूढाशब्द-प्रयोगार्हं।

नाम यथा मदनरिपुरिति भगवत्पर्यायश्चेति तदीयशृङ्गारवर्णने न प्रयोज्यम्। आख्यातमपि, किन्तु यद्वैचित्र्यमावहति (तत्प्रयोज्यम् यथा) "स्मरसि स्मर मेखलागुणैः इति वर्तमानप्रत्ययेन तत्कालाकारणमुपालम्भविषयता, त्वमेवात्र साक्षी अनृतं न प्रवदति, अन्यथा स्मृतवानिति मेखलागुणैरिति स्यात्। उपसर्गोऽपिप्रकृतार्थयोगी यथा—विधिना नव निर्मितेति कृता त्वर्थे न मिति। अभिद्योतको यथा—मुहुरपाविद्धं[?]प्रियालुप्यते" इति। उपसर्गे कर्मप्रवचनीया अप्युपलक्ष्यन्ते (यथा) "त्वः स्वादर्शनात् प्रति", "विचित्रो नास्तीति पुनरेव स्यात्। अर्जुनकृते विचित्रामिति।

मीमांसते हृदयमात्मन एव बाला
नाम्नापि मानरलना सहते न जातु।

न तु चित्तं विचारयत्यात्मन एवेति। एवं मुख्यानुप्रत्ययपदं न तत्र कृत्सु वाच्यं गौरवभयात् नोदाहृतम्।

स्त्रीप्रत्ययो यथा—'अभ्यासीन स वैदग्धी कुनीति न तु वैदग्ध्यं कृनीति; स्त्रीप्रत्ययेन सौभाग्यातिशयप्रतीतेः।

तद्धितपदं तद्धितप्रत्ययोपलक्षणम् तद् यथा—"शात्रव व वपुर्यश" इति न तु शत्रूणा वेति, तद्धितवृत्त्या ह्येकार्थीभावान्वयात् तद्ग्रामीकृतमपि यशसि स्वयग्राही-चतुरित्यर्थं। निपातो यथा—"हा हा हा देवि धीरा भव"। सूचक—आ.? किमत्र किरातैपंत्र शान्ति वर्णानिचा विशेषेण निरङ्कुशा इति। समासेन एकार्थीभावे यत्र सति वृत्तम् ' यथा—मध्येगङ्गायमुनगतु (नेति ?) न तु मध्ये गङ्गायमुनयोरिति। एवं समासान्तरेषु वाच्यम्। शुद्धेषु सर्वेषु चागमादयो निवृत्यन्ता विद्यन्ते यत्रेति मत्वर्थेऽपि च।

सन्धिर्द्विधा नैरन्तर्यं[?]. द्वैपदश्च—भवनोयेति। विपर्ययेण नैरन्तर्यं अपिद्धता नखास्थिरा इति द्वैपं बीभत्सार्दनालने। सूत्र शाङ्खमिति पृथगपि द्विधुति, मङ्गः पदयोः, नैरपदवता, प्रत्यमुत्रमित्यनुस्वानस्योत्तरमप्रान्तिप्रतिरेकेण चात्मनि विश्रान्तयितुमशक्यत्वादेवपदवक्रात्र।

अकाराद्या स्वरा ज्ञेया औकारान्ताश्चतुर्दश।
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधा ॥८॥

तत्र स्वराश्चतुर्दश-अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेया ॥

कादीनि व्यञ्जनानि यथा-क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गं ।

वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ।
अघोषा इति ये त्वन्ये सघोषा सम्प्रकीर्तिता ॥९॥
अष्टौ स्थानानि वर्णानामुर कण्ठ शिरस्तथा।
जिह्वामूलश्च दन्ताश्च नासिकोष्ठौ च तालु च ॥१०॥

अ कु ह् विसर्जनीया कण्ठ्याः। इ चु य शास्तालव्या। ऋ टु र षा मूर्धन्या। ऌ तु ल सा दन्त्या। उ पूपध्मानीया ओष्ठ्या। ≍प≍ फ इति प फा भ्यां प्राक् अर्धविसर्गसदृश उपध्मानीय ≍क≍ ख इति कखाभ्यां प्राक् अर्धविसर्गसदृशो जिह्वामूलीय। ए ऐ कण्ठ्यतालव्यौ। ओ औ कण्ठोष्ठ्यौ। वकारो दन्त्योष्ठ्य। ङ ञ ण न मा अनुनासिका विसर्जनीय औरस्य इत्येके। सर्ववर्णाना मुख स्थानमित्यपरे।

द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च अघोऽपरे।
अघोषा घोषवन्तस्तु ततोऽन्ये परिकीर्तिता ॥११॥
एते घोषाघोषा कण्ठ्योष्ठ्या दन्त्यजिव्ह्यानुनासिक्या।
ऊष्माणस्तालव्या विसर्जनीयाश्च बोद्धव्या ॥१२॥
गघङ जझञ डढण दधन बभम तथैव यरलवा मना घोषा।
कख चछ टठ तथ पफ इति वर्गेष्वघोषा स्यु ॥१३॥
कखगघङा कण्ठ्यास्तालुस्थानास्तु चछजझञा।
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्था ॥१४॥
पफबभमास्त्वोष्ठ्या स्यु दन्त्या लुलसा अहौ च कण्ठस्थौ।
तालव्या इचुयशा स्युर्ऋटुरषा मूर्धस्थिता ज्ञेया ।१५॥
ऌलु दन्त्यौ ओऔ कण्ठौष्ठ्यौ एऐकारौ च कण्ठतालव्यौ।
कण्ठ्यो विसर्जनीयो जिह्वामूलमुद्भव कखयौ ॥१६॥
पफयोरोष्ठस्थान भवेदुकार स्वरो विवृत।
स्पृष्टा काद्या मान्ता शषसहकारास्तथा विवृता ॥१७॥

अन्तस्था संवृतजा इत्यूष्मणमा नासिक्योद्‌भवा ज्ञेया ।
ऊष्माणश्च शषसहा यरलववर्णास्तथैव चान्तस्था ॥१८॥

जिह्वामूलीय ≍क≍, प उपध्मानीयसञ्ज्ञया ज्ञेय ।
कचटतपा स्वरिता स्यु खछठथफा स्यु सदा श्वास्या ॥१९॥

कण्ठ्योरस्यान् विद्यात् घझढधभान् पाठ्यसप्रयोगे तु ।
ज्ञेयो विसर्जनीयो जिह्वास्थाने स्थितो वर्ण ॥२०॥

एते व्यञ्जनवर्णा समासत सञ्ज्ञया मया कथिता ।
शब्दविधिप्रयोगे स्वरांस्तु नृप प्रवक्ष्यामि ॥२१॥

यस्मिन् स्थाने स समो विज्ञेयो य सवर्णसञ्ज्ञोऽसौ ।
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समाना ।
पूर्वा ह्रस्वस्तेषां परश्च दीर्घोऽवगन्तव्य ॥२२॥

इत्थ व्यञ्जनयोगै स्वरैश्च साख्यातनामपदविहितं ।
काव्यनिबन्धाश्च स्युर्धातून्निपातोपसर्गास्तु ॥२३॥

एभिर्व्यञ्जनवर्णैर्नामाख्यातोपसर्गनिपातं ।
तद्धितसन्धिविभक्तिभिरधिष्ठित शब्द इत्युक्त ॥२४॥

[1]पूर्वाचार्यैरुक्त शब्दानां लक्षण समासयोगेन ।
विस्तरश पुनरेव प्रकरणवशात् सप्रवक्ष्यामि ॥२५॥

[[2]अर्थप्रधान नाम स्याद्याख्यात तु क्रियाकृतम् ।
द्योतयन्त्युपसर्गास्तु विशेष भावसंश्रयम्] ॥२६॥

तत्राहु सप्तविध षट्कारकसयुत प्रथितसाम्यम् ।
[निर्देशसम्प्रदानापादानप्रभृतिसञ्ज्ञानि ॥२७॥

---

सवर्णसञ्ज्ञ इति । ये येन तुल्यास्ते तत्सवर्णसञ्ज्ञा ।२२। पूर्वापरीभूतह्रस्व-दीर्घरूपतया स्वरा (भिन्ना अपि अभिन्ना, एकवद्) भान्ति । करिष्यमाण क्रियमाण कृतमिति भूतादिकालयुक्त गमनागमनास्थानध्यासरगैश्चलनान्या क्रियाभ्यो कुत्राम-स्थानम् । एतत्यादिवचनलिङ्गयुक्त नाम ॥२३॥

प्रथित शाब्दोऽर्थो वाक्यरोत दम्य ।२५—२६।

---

२. GOS उद्दिष्ट शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकरणवशाद्धि तद्‌वद् विस्तरत सप्रवक्ष्यामि ॥

२. NS. does not read it.

नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते ।
पृथक्त्वेनोपसर्गेभ्यो निपाताः नियमेऽच्युते ॥२८॥

सप्रत्ययनीतकालक्रियादिसंयोजितं प्रथितसाम्यम् ।
वचनं नागतपुरुषं सुसदृशसंयोजनविभक्तम् ॥२९॥

पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं वापि ।
स्वाद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम् ।
प्रातिपदिकार्थलिङ्गैर्युक्तं पञ्चविधमिदं ज्ञेयम् ॥३०॥

आख्यातं पाठ्यकृतं ज्ञेयं नानार्थश्रयविशेषम्] ।
वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् ॥३१॥

प्रातिपदिकार्थयुक्तान्यात्वर्थानुपसृजन्ति ये स्वार्थे ।
उपसर्गा ह्य् पदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन् ॥३२॥

प्रातिपदिकार्थयोगाद्धातुश्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु ॥३३॥

---

पुरुषैरुत्तममध्यमप्रथमैर्विभक्तम् ॥२९॥

धात्वर्थानुपसृजन्ति उपरागेण अन्यादृशान् कुर्वन्ति तेनोपकारेण प्रादिप्रादिकार्थस्य युक्तसम्बन्धेन प्रकरोतीति । हि शब्दः प्रकर्षे । प्रातिपदिकार्थोपरागेण वा धात्वर्थं विचित्रं करोति । यदा तु स्वार्थे धात्वर्थानुपसृजन्ति अत उपसर्जनात् प्रातिपदिकार्थं च युक्ता उपसर्गा यथा प्राचार्यः प्रान्तेवासी ।३०। प्रातिपदिकार्थयोगात् वृद्धश्च वद्धश्च, धातुयुक्त्या पचति पठति च पाठ (पाठ) योरेव हि समुच्चयार्थश्चशब्दो युक्तो । छन्दोवशात्तु पादपूरणार्थमुच्यते । यत्र द्योतनेन विना न सङ्गता, द्योतने च सति वाक्यमलङ्कृतं भवति । तद्यथा—"भिनत्ति न खलु सम्या" इति खलुशब्दः प्रयासस्याहतार्थत्वं द्योतयति । तच्च येनापि विना स्फुटमेव वाक्यार्थत एव लाभात् । "अहरहरनुगमनात्" इति निर्मज्य वचनं द्योतितस्यापि स्फुटीकरणम्, तद्युक्त्या : "अहो वतासि स्पृहणीयवीर्यं" इत्यत्र प्रातिपदिकार्थतेनैवार्थेऽत्यनिपतनिर्देशीयति ।३१। तद्धित—तस्यै प्रातिपदिकार्थाय हितस्म । प्रातिपदिकार्थं यश्च वा स्वार्थीकुरुते । प्रकृतिप्रत्ययोर्विभागोऽवयवः । वाक्ये तत्सत स( प्र ? )योग-प्रयोजनमैन्द्रोऽभिहितं, सयोग. गवत्य । चान्द्री ज्योत्स्ना । सत्त्व तद्भाव. यथा मृतस्य स्वभाव. मौनस्य वचनं प्रवचनं काटकमादिग्रयुक्त्या, तुर्यपञ्चमाध्यायविहिता निर्दिश्यन्ते ॥३३॥

एतस्य पदस्य बहूना वा पादानां समाप्ति प्राप्तानाम् । वाशब्दात् द्वयोरपि । येनार्थो विभज्यते विभक्त्याख्य प्रत्यय, तेषां च पदानां द्वैविध्य धातोर्वा सत्त्वगि

एवं नानार्थसंयुक्तैः पादैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्युक्तं छन्दोवृत्ताभिधानवत् ॥४४॥

षड्विंशतिः स्मृतान्येभिः पादैश्छन्दांसि संख्यया ।
समञ्चार्धसमञ्चैव तथा विषममेव च ॥४५॥

छन्दोयुक्तं समासेन त्रिविधं वृत्तमिष्यते ।
नानावृत्तिविनिष्पन्ना शब्दस्यैषा तनूः स्मृता ॥४६॥

छन्दोहीनो न शब्दोऽस्ति न च्छन्दः शब्दवर्जितम् ।
तस्मात्तूभयसंयोगो नाट्यस्योद्योतकः स्मृतः ॥४७॥

एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं[1] त्र्यक्षरमित्याहुः, प्रतिष्ठा चतुरक्षरा ॥४८॥

सुप्रतिष्ठा भवेत् पञ्च, गायत्री षट् भवेदिह ।
सप्ताक्षरा भवेदुष्णिगष्टाक्षरानुष्टुबुच्यते ॥४९॥

नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ॥५०॥

त्रयोदशातिजगती शक्वरी तु चतुर्दश ।
अतिशक्वरी पञ्चदश षोडशाष्टिः प्रकीर्तिता ॥५१॥

अत्यष्टिः स्यात्सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिर्धृतिः कृतिर्विंशतिरेव च ॥५२॥

प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृतिः स्यात् त्रयोविंशः चतुर्विंशा च संकृतिः ॥५३॥

पञ्चविंशत्यभिकृतिः षड्विंशात्युत्कृतिर्भवेत् ।
अतोऽधिकाक्षरं छन्दो मालावृत्तं तदिष्यते ॥५४॥

---

अथ छन्दोलक्षणं वक्तुं तस्य स्वरूपं तावदाह एवमित्यादि । वर्णा गुरुत्व-लघुत्वाद्यवच्छिन्नाः । विविधैर्भूषणैः सालंकारैः पादैश्चतुर्भिरिति सबन्ध इव तत्तच्च पादेषु भवति, यद्यपि निगदनीयत्वेऽपि विशेषमनया व्यपदेशः ।४४। षड्विंशतिरिति तावत्परिमाणान्येकाक्षरात्प्रभृति षड्विंशत्यक्षराणि यावदुक्तादीन्युत्कृत्यन्तानि छन्दांसीत्यर्थः । पादचतुष्टये तुल्यलक्षणं समं, अतुल्यलक्षणं विषमम्, अर्धसमं प्रथमतृतीययोर्द्वितीयचतुर्थयोः । सञ्ज्ञाभिश्छन्दोभेदा आश्रिताः ।४५।

---

१. GOS, एवं ।

छन्दसां तु तथा ह्येते भेदा प्रस्तारयोगत ।
असंख्येयप्रमाणानि वृत्तान्याहुरतो बुधा ॥५५॥

गायत्रीप्रभृतिस्त्वेषां प्रमाणं सविशेषतं ।
प्रयोगजानि सर्वाणि प्रायशो न भवन्ति हि ॥५६॥

वृत्तानि च चतुष्षष्टिर्गायत्र्यां कीर्तितानि तु । (६४)
शतं विंशतिरष्टौ च वृत्तान्युष्णिह्युपोच्यते ॥५७॥ (१२८)

षट्पञ्चाशच्छते द्वे च वृत्तानामप्यनुष्टुभि । (२५६)
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च ॥५८॥ (५१२)

पङ्क्त्यां सहस्रं वृत्तानां चतुर्विंशतिरेव च । (१०२४)
त्रिष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाष्ट च ॥५९॥ (२०४८)

सहस्राण्यपि चत्वारि नवतिश्च षडुत्तरा ।
जगत्यां समवर्णानां वृत्तानामिह सर्वश ॥६०॥ (४०९६)

अष्टौ सहस्राणि शतं द्व्यधिका नवति पुन ।
जगत्यामतिपूर्वायां वृत्तानां परिमाणत ॥६१॥ (८१९२)

शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ।
वृत्तानि चैव चत्वारि शक्वर्यां परिसंख्यया ॥६२॥ (१६३८४)

द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च ।
अष्टौ षष्टिश्च वृत्तानि ह्यथचन्त्यतिशक्वरीम् ॥६३॥ (३२७६८)

पञ्चषष्टिसहस्राणि सहस्रार्धञ्च सङ्ख्यया ।
[1]षट्त्रिंशच्चैव वृत्तानि ह्यष्ट्यां निगदितानि च ॥६४॥ (६५५३६)

एकत्रिंशत्सहस्राणि वृत्तानाञ्च द्विसप्तति ।
तथा शतसहस्रञ्च छन्दस्यत्यष्टिसंज्ञिते ॥६५॥ (१३१०७२)

धृत्यामपि हि विज्ञेयं वृत्तान्याकल्पितानि तु ।
तज्ज्ञै शतसहस्रे द्वे शतमेकं तथैव च ॥६६॥

---

तथा ह्येते भेदा इत्याह प्रस्तारयोगत इति प्रस्तारे योगो युक्ति तत्र तत्र युक्तिवदने—

"प्रथमे सर्वे गुरु, तत्र पूर्वगुरोरधो ल परिपूर्वं तरवम् ।
स्यात्पूर्वं पूर्वं गुरुणेति यावत्सर्वं ल प्रस्तारे तदेव ॥

---

१ षड्विंशच्चैव वृत्तानि तथाष्ट्यां गदितानि तु ।

द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगत ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥६७॥ (२६२१४४)

अतिधृत्या सहस्राणि चतुर्विंशतिरेव च ।
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ॥६८॥

अष्टाशीतिश्च वृत्तानि वृत्तज्ञै. कथितानि च । (५२४२८८)
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥६९॥

चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ।
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणत ॥७०॥ (१०४८५७६)

तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
सप्त वै गदितास्त्वत्र नवतिश्चैव संख्यया ॥७१॥

सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ॥७२॥ (२०९७१५२)

चत्वारिंशत्तथैकञ्च लक्षाणामथ संख्यया ।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥७३॥

शतत्रय समाख्यातं ह्याकृत्या चतुरुत्तरम् । (४१९४३०४)
ज्ञेया शतसहस्राणामशीतिस्त्वधिका बुधै. ॥७४॥

अष्टाशीति सहस्राणि वृत्तानां षट्शतानि च ।
अष्टौ चैव तु वृत्तानि विकृत्या गदितानि तु ॥७५॥ (८३८८६०८)

तथा शतसहस्राणि सप्तषष्टिश्च सप्तति ।
सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥७६॥

कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै । (१६७७७२१६)
कोटित्रयञ्चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् ॥७७॥

पञ्चाशद्भि सहस्रैश्च चतुर्भिरधिकैस्तथा ।
चतुष्टयं शतानाञ्च द्वात्रिंशद्भि. समन्वितम् ॥७८॥ (३३५५४४३२)

षट् कोटयस्तथोत्कृत्यां लक्षाणामेकसप्तति. ।
चतुष्षष्टिशतान्यष्टौ सहस्राण्यष्ट चैव हि ॥७९॥ (६७१०८८६४)

---

एते यथा भेदा. । षडक्षराणि गायत्र्या तत एतारभ्य प्रयोगार्हत्वेनेति सूचयति उक्त्यादीनामप्रयत्वात् । तदाह प्रयोगज्ञानीति लक्ष्यतो न स्थितानि, अपि तु वेदवद् दृश्यन्त इति भाव: । वृत्तानि च चतुष्षष्टिरित्यादिना स्वकण्ठेन संख्या पठति यावत् ।

षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्तति ।
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च ॥

[1]गायत्र्यां द्वौ त्रिकौ ज्ञेयौ, उष्णिक् चैकाधिकाक्षरा ।
अनुष्टुप् द्व्यधिका चैव बृहत्या च त्रिकास्त्रय ॥६२॥

एकाक्षराधिका पङ्क्तिस्त्रिष्टुप्चैव द्व्यधिकाक्षरा ।
चतुस्त्रिका तु जगती सैवातिजगती पुनः ॥६३॥

शक्वरी द्व्यधिका पञ्च त्रिका ज्ञेयातिशक्वरी ।
एकाधिकाक्षराऽष्टिश्च द्व्यधिकात्यष्टिरुच्यते ॥६४॥

षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ।
कृतिश्च द्व्यधिका प्रोक्ता प्रकृत्या सप्त वै त्रिका ॥६५॥

आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ।
अष्टत्रिका सकृतौ स्यात् सैका चाभिकृतिः पुनः ॥६६॥

उत्कृतिर्द्व्यधिका चैव विज्ञेया गणमानतः ।
[गुर्वेक ग इति प्रोक्त गुरुणी गाविति स्मृतौ ।
लघ्वेक ल इति ज्ञेय लघुनी लाविति स्मृतौ ॥६७॥

---

यथा (श्य ?) (मध्या) क्षरे तत्पिण्डयित्वा एकाक्षरक्षेपात् (धृति.) एकसंख्याकाक्षराद्यक्षरक्षेप षड्विंशत्यक्षर यावत् "द्व्यश उक्तक्रमेणेह द्वैगुण्यं यावदुच्यते" । इति ॥६२॥

एकाक्षरे द्वौ, द्व्यक्षरे चत्वार, त्र्यक्षरेऽष्टौ, चतुरक्षरे षोडशेत्यादिसक्षेप । अनेनैवोपायेन विचार्य ग्रन्थे पाठो निश्चेय ।६२। सर्वेषा छन्दसा वृत्तानामित्यादावयं. समासेन जयदेवोऽप्यधात्—"सर्वादिमध्यान्तगलौ त्रिकौ म्नौ म्यौ ज्रौ स्तौ" इति (अ. १-२) त्रिकैरुपलक्षितेऽपि वृत्ते त्रिकमध्यानेन यत्र छन्दो न पूर्यते यथोष्णिक्, अत्रैकमधिकमक्षरमधिकत्वेनोक्त अनुष्टुभि द्वे । अत्र त्रिकबीजानि गुरुलघुरूपाण्येव वर्तिष्यन्ति ॥६३॥

अत्रैकमधिकमिति । तथा चैक गुरु लघु वा द्वे गुरुणी द्वे लघुनी द्वे लघुगुरुणी गुरुलघुनी वा तदाह द्विकौ ग्लावित्यादि वक्ष्यमाणश्लोकेन व्याचष्टे नैवातिरिक्तमिति । सम्पदिति स्वराट् विराट् भूरिक् निचृत् इत्येषां श्रुतावेव सम्भवो न काव्य इति तात्पर्यम् । एतन्निरूपण तु उपयुज्यते यत्र वेदवाक्यसदृश वाक्यं निर्णीयते, यथा अभिज्ञानशाकुन्तले ॥६४॥

---

१. GOS read here before this verse. गायत्री प्रभृति त्वेषा प्रमाण सम्प्रवर्तते । प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥

[1]सपदिरामपादाश्च दैवतस्थानमक्षरम् ।
वर्णं स्वरो विधिर्वृत्तमिति छन्दोगतो विधिः ॥९८॥
नैवातिरिक्तं हीनं वा यत्र सपद्यते क्रमः ।
विधाने छन्दसामेव सपविरत्यभिसंज्ञितः ॥९९॥
यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः ।
पादश्च पद्यतेऽर्थोतिश्चतुर्भाग इति स्मृतः ॥१००॥
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
शारीरमथसम्भूतं विगाथयमथापि च ॥१०१॥
[शारीरं मन्त्रसभूतं छन्दो गायत्रसंज्ञितम् ।
कृष्टे मध्ये दिने प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥१०२॥
तृतीयसवनञ्चापि शीर्षस्थं जागतं हि यत् ।]
ह्रस्वं दीर्घं प्लुतञ्चैव त्रिविधञ्चाक्षरं स्मृतम् ॥१०३॥
श्वेतादयस्तथा वर्णा वित्तेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥१०४॥
ध्रुवाविधाने चैवास्य सम्प्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथैवार्थकृतो भवेत् ॥१०५॥

---

अर्थस्यावान्तरस्यास्य समाप्तिसंक्षणतो यति । 'यथा मीलति मति रात्रि" यथा "आयान्त्या तुल्यकाल" इति न तु "जम्भारातीभकुम्भोद्भव" इति उच्छन्दोऽर्थसमाप्त्यभावात् । चतुर्भाग इति पादान्ते छेद कर्तव्य, न तु "ताम्बूल-वल्लीपरिणद्धपूगासु, ऐला" । इति । प्रयोगी प्रतिपादमङ्कुरीहृत्य पदमध्ये विश्राम्यति । विश्रान्तो नात्र वृत्तभङ्गोऽर्थभङ्गोऽभिनेयस्याप्रकटत्वाद्भङ्गाङ्कुरादिनिरूपणमेतत् "करविदुरान्तो वा" इति ॥१००।

---

१. GOS. reads here following lines more.

अष्टाक्षरादधिको पादावन्तो हीनाक्षरावपि ।
स्वराविति समास्याता विराविति हि सूरिभिः ।
पादो यस्या ऋचश्चैव भवेदेकाधिकाक्षरः ।
समास्तत्वे नव पादा' सा मृदुः सम्प्रकीर्तिता ।
एकाक्षरो न पादश्चैको यस्या ऋचो भवेत् ।
यथा पादस्त्वदस्यान्ते सा निवृत्सम्प्रकीर्तिता ।
सम्पदादपुना चैषां छन्दसां सम्प्रयुच्यते ।

छन्दतो यस्य पादे स्यादूनं वाऽधिकमेव वा[1] ।
अक्षरं निचृदिति प्रोक्तं भूरिक् चेति द्विजोत्तमाः ॥१०६॥

अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ।
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ॥१०७॥

सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ।
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ॥१०८॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ॥१०९॥

तथातिजगती चैव शक्वरी चातिशक्वरी ।
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः ॥११०॥

कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ।
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषाः ॥१११॥

---

अधिष्ठात्री देवता वह्न्यादयः । शरीराथेत्यादि । तथोक्तं कात्यायनेन—

वीरस्य भुजदण्डानां वर्णने स्रग्धरा भवेत् ।
नायिकावर्णने कार्यं वसन्ततिलकादिकम् ॥
शार्दूललीला प्राच्येषु मन्दाक्रान्ता च दक्षिणे । इत्यादि ।

प्लुतस्याप्यत्र प्रयोगो भवत्येव । यथा—"यनोऽभिमानेन स एष मूढो द्रोणारिरे याति पदे विरम" स तु पाठो दीर्घवत्पठितव्य प्रयोगश्च विभाग एव ।

श्वेनादय इति छन्दसि प्रतिभागधादौ विविधो वर्णः कृत तदनुप्रयोगाभ्यासाभिर्लक्षितम् । भगवते कृत इति श्लोके चेषाधिद्वोधकगोटकादीनां गीयमानतया शोभातिशयो भवति । स्रग्धरादीनां तु पाठेन । च शब्देन प्रकारार्थेन व्याचष्टे दिव्य इति । प्रथम इति स्तोत्रशास्त्रेषु गप्तानामेव छन्दसां बाहुल्येन दर्शनात् । देवस्तुत्यादौ देवेषु वक्तृष्वय गण इत्यर्थः । गण इति द्वितीयो दिव्यानिवृत्तो गण इत्यर्थः तेन मानुषेषु वक्तव्यय प्रायेण । तृतीयस्तु दिव्यमानुषेषु च रागादिषु नरपतिषु च ।

प्रस्तारस्तत्र सख्यादि सर्वमिति सप्रयशब्देनाह, तद्गुणमविज्ञानाच्च प्रस्तारोऽप्युच्यते । प्रस्तरण विनानन लक्षणमङ्कमस्येत्यर्थः । नष्टमिति स्वरूपेणैव न ज्ञात सख्यया तु ज्ञातम्, उद्दिष्ट तु स्वरूपेण ज्ञात न सख्यया । तज्ज्ञानोपायेन नष्टादयः सिद्धा. ।

---

१. GOS वृत्तस्यर्धसम चैव विषममेव च ।

एतेषां छन्दसां भूयः प्रस्तारविधिसम्भवम् ।
लक्षण सम्प्रवक्ष्यामि नष्टमुद्दिष्टमेव च ॥११२॥

प्रस्तारोऽक्षरनिर्दिष्टो मात्रोक्तश्च तथैव हि ।
द्विको ग्लाविति वर्णोक्तो मिश्रो चेत्यपि मात्रिको ॥११३॥

गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ।
अग्रतस्तु समादेया गुरव पृष्ठतस्तथा ॥११४॥

प्रथम गुरुभिर्वर्णैर्लघुभिस्त्ववसानकम् ।
वृत्तानु सर्वछन्दस्सु प्रस्तारविधिरेव तु ॥११५॥

गुरुंधस्ताल्लघु न्यस्य तथा द्विद्वि यथोदितम् ।
न्यस्येत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ॥११६॥

मात्रासंख्याविनिर्दिष्टो गणो मात्राविकल्पित ।
मिश्रो ग्लाविति विज्ञेयो पृथक् लघुविभागत ॥११७॥

मात्रागणो गुरुश्चैव लघुनो चैव लक्षिते ।
चार्याणां तु चतुर्मात्राप्रस्तारः परिकल्पित ॥११८॥

---

तत्र वर्णगतो मात्रागतश्चेति प्रस्तारो द्विधा, तमुदाहरति । द्विको ग्लाविति वर्णमस्यादिनियमेन यो गुरु लघु द्विको गन्तारविभागो नो मात्रिको मात्रागणेपूक्तो । अन्येनापि द्विकरणादेन भेदन मिश्रो भवत ॥११३॥

अथ प्रस्तारोऽनुलक्षणम्—गुरोरधस्तादिति । आदन्यैव गुरोरधो लघु सर्वो न्यसनीय । यत्र द्वौ भागौ मिश्रौ विषमसंख्यावा तदा द्विरिति भूयो भूय । मात्राप्रस्तारो निष्पद्यते । मात्रागतिरक्तिना वन्निमात्रचतुर्मात्रादि समूहो गणनामगन्ताला लघ्वक्षरसंख्यया तत्र प्रथम प्रस्तार उच्यते पूर्वान्तरलोपोऽपि भवतोऽत्र गणादावत्र गुरु सर्वतो न्यसनीयः । यत्र तु द्वौ भागौ मिश्रौ, विषमसंख्याया तदादौ लघुश्चो गुरु देय वर्णप्रस्तारेण तुल्यम् । केवल मात्रागणेऽपि गणनाद् गणान्ता । पूरय मात्रा देया । यत्र वर्णप्रस्तार तत्र विषमप्रस्तारेऽपि मात्रेऽनुग्राह्या एव ॥११४॥

द्वितीयस्तु गणाद् गुर्वादि आद्ये अन्त्ये गुरु इत्यर्थ । लघुनी चकाराद् गुरु, तथा प्रस्तारस्यापूर्वकम् ॥११७॥ चतुर्मात्रा आर्याणां प्रस्तारे गणभेद पञ्चसंख्य इत्यर्थ । पञ्चमात्रोऽप्यथा, एव षष्ठादिष्ववस्तारोऽपि इति अनुवर्तन्ते च इत्यर्थ । अन्यत्र तु मात्रागणो गणविभाग गतेऽन्यथा गुरुलघुस्वरूपमात्र इत्यनन्तेन ॥११८॥

दीनरुप्रभृतीनान्तु पञ्चमात्रो गण स्मृत ।
[1]वैतालीय पुरस्कृत्य षण्मात्राद्यास्तथैव च ॥११९॥

त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विता ।
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रय ॥१२०॥

अन्त्याद् द्विगुणिताद्रूपात् द्विद्विरेक गुरोर्भवेत् ।
द्विगुणाञ्च लघो· कृत्वा सख्यां पिण्डेन योजयेत् ॥१२१॥

आद्य सर्वगुरु ज्ञेय वृत्तन्तु समसज्ञितम् ।
[2]कोश तु सर्वलघ्वन्त्य मिश्ररूपाणि सर्वत ॥१२२॥

[3]वृत्तानान्तु समानानां सख्या सयोज्य तावतीम् ।
राश्यूनामर्धविषमां समासादभिनिर्दिशेत् ॥१२३॥

---

तत्रोद्दिष्टमाह द्विगुणितादिति वर्णवृत्तेष्वेव चेद सर्व मन्तव्यम् । (कमपि) भेद पश्य; एकमङ्क द्विगुणित च दत्वा द्विद्विरिति भूयो द्विगुणितम् कृत्वान्त्य सरिममाप्य गुरुसबन्धिनोऽङ्कान् परेत् पूरयेत् । लघो सबन्धिनोऽङ्कान् पिण्डीकृत्य तेन पिण्डेनानिक्रान्तैर्नतावानय भेद इति सख्या निर्दिशेत्, यथा चतुरक्षरस्यैदृशी क्रिया कृत्वा भेद वदेत् यत्र लब्धाङ्कगणनातिक्रान्ता ॥१२१॥

अथैनाखिलगुज्ञानार्थं पीठ रचयति आद्य सर्वगुर्वित्यादि । कोश इत्याद्यन्तयोर्मध्यगो भेदगणः । सोऽस्य सर्वो सख्यया निश्चय कुर्यात् । तद्यथा चतुरक्षरो प्रथमान्त्यौ सर्वगुरु सर्वलघुश्च, एकद्वित्रिलघवस्तु चतुष्पट् चतुःप्रकारा सक्षेपत इति एतदङ्कक्ष्यामिश्रणेन सख्या लभ्यते षोडशभेदाश्चतुरक्षरस्येति ॥१२२॥

सख्यास्यान उपायान्तरमाह् एतदिकामिति । छन्दोऽक्षरोपरि एकद्विचत्वारीस्यदीनि निक्षिपेत् । तत्र पूर्वेणोत्तरस्य मिश्रण कुर्यात् यावत्पर्यन्त गणपिण्डस्ता चैषादिकामेवैन मिश्रित कुर्यादित्येव समवृत्ताना सख्या । लघूनामित्थं षोडशभिर्गणयेत् । ततो गुणराशे. षोडशसख्यामवपातयेत । तेन चतुरक्षरे विशत्यधिक शतमर्धसमवृत्तानां

---

१. य पुरस्कृत्य षण्मात्रा स्युस्तथैव च त्र्यक्षराः ।
त्र्यक्षरास्तु त्रिका ज्ञेया गुरुलघ्वक्षराश्रया ॥
२. KSS., NS कोशे ।
३. NS. नैधनादङ्कमेकैक प्रतिलोमक्रियात्मकम् । इति श्लोकार्धमधिकमस्ति ।

[1]एकादिकां तथा सख्यां छन्दसो विनिवेशय तु ।
[2]यावत् पूर्णन्तु पूर्वेण पूरयेदुत्तर गणम्[3] ॥१२४॥
समानां विषमाणां च सगुणम्य तथा स्फुटम् ।
राशयूनाममिजानीयाद्विषमाणां समासत ॥१२५॥
एव कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
[[4]क्रमान्नंधनमेकैक प्रतिलोम विसर्जयेत् ॥१२६॥
सर्वेषां छन्दसामेव सख्याक्षरविनिश्चयम् ।]
जानीत समवृत्तानां सख्यां सक्षेपतस्तथा ॥१२७॥
[5]वृत्तस्य परिमाणन्तु छित्वाऽर्धेन यथाक्रमम्[6] ।
न्यसेल्लघु तथा संकमक्षर गुरु द्विधाप्यथ ॥१२८॥
एव विन्यस्य वृत्तानां नष्टोद्दिष्टविभागत ।
गुरुलघ्वक्षराणीह सर्वछन्दस्सु दर्शयेत् ॥१२९॥
[इति छन्दांसि यानीह मयोक्तानि द्विजोत्तमा [1] ।
वृत्तान्येतेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ] ॥१३०॥

---

तामपि सख्यां गुणयित्वा गुणराशि पातयेत् । तेन च सहस्राणीति शतान्यशीतिश्चेति चतुरक्षरे विषमवृत्तानि ॥१२४॥

अथ नष्टमाह वृत्तस्य परिमाण त्विति सख्यामर्धेन छिन्द्यात् । यत्र विषमाङ्क न पूर्यते तत्र पूरणार्थमेकमधिकं कुर्यात् । तदाह यथाक्रममिति । तत्र गुरु । मैककरणा-त्प्रथमलघोरपात् लघुरन्यथा च्छेदनात् । एव पुन पुनर्यावदक्षराणि पूर्णानि तावत् । चतुरक्षरे पञ्चमो भेद कीदृगिति—पूर्व पञ्चाङ्कस्य मैकच्छेदात् गुरु, पुनरपि त्र्यङ्कस्य सैकच्छेदात् गुरु, द्वयोश्च समच्छेदाल्लघु एकस्य सैकच्छेदाद् गुरु, एतेनेदृश पञ्चमो भेद ॥१२६॥

एतदुपसहरन्नध्यायान्तरमानुप्रयति एवमिति । ध्याङ्गेन विभाषन लघु-प्रधानानि वा गुरुप्रधानानि वा सदर्वे निवेशयेत् कविरुपबन्धीयादिति शिवम् ॥१३०॥

---

१. NS एकाधिकां । KSS, एकाद्यां च ।
२. NS. यावच्चरणं ।
३. KSS, उत्तरस्तथा ।
४. NS does not read
५. NS., वृत्तार्धपरिमाण KSS. वृत्तान्तपरिमाण ।
६. KSS, गुरु न्यसेत् ।

[1]इति भरतीये नाट्यशास्त्रे वाचिकाभिनये छन्दोविधान नाम

चतुर्दशोऽध्याय ।

---

पार्वतीवदनाम्भोजभृङ्गनेत्रत्रयीभुव ।
दासोऽभिनवगुप्ताख्यश्छन्दोऽध्यायमपप्रयत् ।

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायामभिनवभारत्या नाट्यवे-
विवृतौ छन्दोऽध्यायश्चतुर्दश समाप्तिमगमत् ॥

□□□

१. इति भारतीये नाट्यशास्त्रे वाचिकाभिनयच्छन्दोविभागो नाम पञ्चदशोऽध्याय. ।

# नाट्यशास्त्रम्

## अथ पञ्चदशोऽध्यायः

¹छन्दांस्येव हि यानीह मयोक्तानि द्विजोत्तमाः ।
²वृत्तानि तेषु नाट्येऽस्मिन्प्रयोज्यानि निबोधत ॥१॥

आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत् ।
³सा स्यात्तनुमध्या गायत्रसमुत्था ॥२॥

यथा—सत्यव्रतविनूपा⁴ ध्वस्ताञ्जननेत्रा ।
हस्तार्पितगण्डा किं ? त्वं तनुमध्या ॥३॥

भयुगण आदौ भवति चतुष्के ।
गुरुयुगमन्त्ये मकरकशीर्षा ॥४॥

यथा—स्वयमुपयान्तं भजसि न कान्तं ।
भयकरि किं ? त्वं मकरकशीर्षा ॥५॥

---

अभिनवभारती

समस्तवृत्तानि विना न येन षट्त्रिंशकथोत्तरसावता ।
छन्दांसि यस्मात्प्रभवन्ति वन्दे तं वाङ्मयं ज्योतिरिहाष्टमूर्तेः ॥

चतुरक्षराणि निर्दिष्टानि (१४-१३३) तत्र प्रस्तारात् प्रविभागमात्मना तनुमध्यामेव छन्दांसि तानीति । एषां छन्दसां नाट्यप्रयोगेऽपि वृत्तानि निबोधेति सम्बन्धः । गुरुलघुनियमेन प्रस्तारा वर्तते यत्र तानि वृत्तानि प्रस्तारवशात्, अधिकरणे वा ॥१॥ गायत्रीत आरभ्य प्रयोगार्हाणि पूर्वाध्याये । तत्रादितः तनुमध्यामेवाह आद्ये पुनरिति, मध्ये तु लघुनी अर्थात् । गायत्र्येव गायत्रम् । अत्रेहाध्याये भरतमुनिकृतमिति त्रिकविरागादिभिः वैदिकविशिष्टलक्षणं श्लोकानिति द्विविधं पुस्तकपाठो दृश्यते मध्ये च विस्तराय पुस्तकेषूक्तमपि पठ्यत इति ॥२॥

---

१. KSS, NS. इति छन्दांसि ।
२. KSS, NS. वृत्तान्येतु ।
३. KSS पुन तनुमध्या ।
४. KSS. भूषणा ।
५. KSS. भवसि किं त्व ।

एकमात्र षट्के स्याद् द्वितीय पादे ।
ख्यातरूपा वृत्ते मालिनी सा नाम्ना ।।६।।

षडक्षरकृते पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा ।।७।।

[1]स्नानगन्धाधिकर्मवस्त्रभूषायोगैः ।
व्यक्तमेवासौ त्व मालिनी प्रख्याता ।।८।।

द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम् ।
शेषाणि च गुरूणि स्युर्मालती नाम सा यथा ।।९।।

शोभते बद्धया षट्पदाविद्धया ।
मालतीमालया मानिनी लीलया ।।१०।।

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे ज्ञेया सा तूद्धता यथा ।।११।।

[2][सौ त्रिरौ यदि पादे ह्यन्तिमश्च गकारः ।
चरणगुम्फितपादा उद्धता खलु नाम्ना] ।।१२।।

[3]दन्तकृन्तक्षताश्च व्याकुलालकशोभम् ।
शंसतीव तवास्यं निर्दय रतयुद्धम्[4] ।।१३।।

आदौ द्वे निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया नाम्ना भ्रमरमालिका ।।१४।।

[5][पादे यदि निविष्टौ सम्यग्विरचितौ लौ ।
अन्त्ये यदि गकारः सा तु भ्रमरमाला] ।।१५।।

यथा—नानाकुसुमचित्रे प्राप्ते सुरभिमासे ।
एषा भ्रमति मत्ता कान्ते भ्रमरमाला ।।१६।।

आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलेखेति सा यथा ।।१७।।

---

एतन्नाम्ना प्रसिद्धा स्यातरूपा श्लाघनीयेत्यर्थः ।।६।।

---

१. NS. स्नानगन्धप्रागिम ।
२. KSS., NS. do not read.
३. NS., KSS दन्तक्षतिकृताङ्क ।
४. KSS., NS युद्धमुद्धतवेषम् ।
५. KSS., NS. do not read.

[जातु यस्य गौ न, पादे सस्मिन् समस्तरूपे ।
तामनुष्टुभमाश्रयस्थां वावदन्ति सिंहलेखाम्] ॥१८॥
यत्त्वया ह्यनेकभावैश्चेष्टितं रहः सुगात्रि ।
तन्मनो मम प्रविष्टं वृत्तमत्र सिंहलेखम् ॥१९॥

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च ।
गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् ॥२०॥
[यदा तु जात्परौ रलौ गकार एव च स्थितः ।
अनुष्टुबुद्भवं तदा वदन्ति मत्तचेष्टितम्] ॥२१॥
यथा—[1]वराववघूर्णितेक्षणं विलम्बिताकुलालकम् ।
असंस्थितं पदं प्रिया करोति मत्तचेष्टितम् ॥२२॥

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन्सा नाम्ना [2]विद्युन्मालेति कीर्तिता ॥२३॥
[मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च ।
सा चानुष्टुप्छन्दस्युक्ता नित्यं सद्भिर्विद्युन्माला] ॥२४॥
[3]साम्भोनारैराननद्धिः श्यामाम्भोदैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युन्माला ॥२५॥
[4][पञ्चमं सप्तमं चान्त्यं गुरु पादेऽष्टकं तथा ।
छन्दोऽनुष्टुभमेतत्तु वृत्तं चित्तविलासितम् ॥२६॥

स्मितवशविप्रकाशितदशनवरैरमीभि ।
वरतनु [1] पूर्णचन्द्र तव मुखमापृणोति] ॥२७॥
नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च ।
गुरूणि यस्या सा नाम्ना ज्ञेया मधुकरी यथा ॥२८॥

[यदिह यदि लघूनि स्युर्निधनगनमकारश्चेत् ।
बुधजनविहितोऽसौ सा भवति मधुकरी नाम्ना] ॥२९॥

---

त्वया यन्मदीयं मनः प्रविष्टं भ्रान्तमाक्रान्तं तत्सिंहलेखाविलासगतत्वाद् यातम् ।
तस्य वृत्तं तदपाश्रान्तम् ॥१९॥

---

१. NS. वरावघूर्णिता । KSS. varies.

२. विद्युन्मालेति नामान्तरम् ।

३. KSS. सान्द्राम्भोभिर्नीलाम्भोदैः NS. अम्भोभारैराननद्धि ।

४. KSS., NS. do not read.

कुसुमितमभिपश्यन्ती[1] विविधतरुगणैश्छन्नम् ।
वनमतिशयगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥३०॥

[2]दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका ॥३१॥

[त्रीण्यादौ यदि हि गुरूणि स्युश्चत्वारो यदि लघवो मध्ये ।
पङ्क्तावन्तगतमकारं स्याद्विज्ञेया कुवलयमालाख्या] ॥३२॥

यथा—[3]अस्मिस्ते शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये ।
शोभा त्वां न वहति ता वद्धा सुश्लिष्टा कुवलयमालेयम् ॥३३॥

द्वितीयं च चतुर्थं च षष्टमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥३४॥

[जौ त्रिकौ हि पादगौ तु यस्या गौ च सश्रितौ तथा समौ स्तौ ।
पङ्क्तियोग सुप्रतिष्ठिताङ्गी सा मयूरसारिणीति नाम्ना] ॥३५॥

यथा—नैव तेऽस्ति सगमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् ।
गर्भिणीव दृश्यसे ह्यनार्ये ! किं मयूरसारिणी त्वमेवम् ॥३६॥

[4]आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत् ॥३७॥

[भौ तु भगाविति यस्य गणा स्यु स्याच्च यतिश्चिचतुर्भिरथास्मिन् ।
त्रैष्टुभमेव हि तत्तु नाम्ना दोधकवृत्तमिति प्रवदन्ति] ॥३८॥

यथा—प्रस्खलितापपदप्रचिचाय मत्तविघूर्णितगात्रविलासम्[5] ।
पश्य विलासिनि ! कुञ्जरमेत, दोधकवृत्तमय[6] प्रकरोति ॥३९॥

---

दा मा त्वाम् (स्वभाववर्तने ये भेदा ?) वैडूर्यच्छायानि यानि दलानि तत्तत्स्फुरत्सुवर्णतुल्यानि वर्णानि तदभ्यन्तरक्रमराणि ॥३३॥ मयूरवद् ध्यावोचमस्या मयूरीमिर्वा (मार्गो) गतिविशेषो भवतीत्याह ॥३६॥
मन्द मन्द दोधकेन गीयमानं वृत्तं दोधकवृत्तम् ॥३९॥

---

१. KSS अपश्यन्ती ।
२. KSS. varies.
३. KSS, NS. varies absolu tely.
४. KSS , NS प्रथमं च चतुर्थं च ।
५. KSS. विलासम् ।
६. KSS., NS. गतिम् ।

आदौ द्वौ पञ्चमं चैवाप्यष्टमं नैधनं तथा।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥४०॥

एषोऽम्बुदनिस्वनतुल्यरवः [1]क्षीबः स्खलमानविलम्बगतिः।
श्रुत्वा घनगर्जितमद्रितटे वृक्षान् प्रतिमोटयति द्विरदः ॥४१॥

नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु[2]।
[3]एकादशाक्षरे पादे इन्द्रवज्रेति सा यथा ॥४२॥

[4]त्वं दुर्निरीक्ष्या दुरतिक्रमा च [5]दुर्ग्राह्यभावा कठिनस्वभावा।
सर्वास्ववस्थासु च कामतन्त्रे योग्यासि किं ? वा बहुनेन्द्रवज्रा[6] ॥४३॥

एभिरेव तु संयुक्ता लघुनिस्त्वेष्टभो यदा।
उपेन्द्रवज्रा विज्ञेया [7]लघ्वादाविह चेत्तनम् ॥४४॥

[8]प्रिये ! प्रिया वर्णविशेषणेन स्मितेन कान्त्या सुकुमारभावैः।
अमी गुणा [9]रूपगुणानुरूपा [10]भवन्ति ते किं ? त्वमुपेन्द्रवज्रा[11] ॥४५॥

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥४६॥

---

एष इति यावन्मुरजपानतुल्य गर्जित श्रुत्वा ॥४७॥

उपेन्द्रवज्रा अस्या उपमानत्वेन सा यथा। मत्तर्दोप उपेन्द्रवज्रास्त्वं इत्यनुप उपमितमुपेन्द्रवज्रमिव पुरुषमितममास। द्विप्राप्ते परवल्लिन्दुनिरोध.। स्मितेन कान्त्या च। रूपगुणयोर्ऽपि वर्णविशेष भवति ॥४५॥

---

१ KSS. धनस्वनतान।
२ KSS, NS लघून्यथ।
३. KSS., NS. यत्रैकादशके।
४. KSS, NS भद्र निरीक्ष्यासुनिरस्तनाया।
५. NS. दुर्गेन नाम्ना कठिनौ स्तनौ ते।
६. KSS. वज्रे।
७ NS लघ्वादुर्विनिह।
८. KSS. प्रिया च वर्णैः। NS प्रेम्णा प्रिया वर्णविशेषणेन।
९. KSS. कान्ता।
१०. NS. वसन्ति।
११. द्योत्ये ग्रन्थान्तरेषु "षष्ठं च नवमं" इत्यादिश्लोकद्वयमधिकं वर्तते।

किं? त्वया सुभट¹ दूरवर्जित नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपराणस्य ते याति धूलिरधुना रथोद्धता ॥४७॥

यथा—¹[किं ? त्वया कुमतिसङ्गया सदा नाशयेव सुहृदा प्रियं कृतम् ।
यद् गृहाद्वचनरोषकम्पिता याति तूर्णमवता रथोद्धता] ॥४८॥

आद्यं तृतीयमन्त्यं च सप्तमं दशमं गुरु ।
²यस्यास्तु त्रैष्टुभे पादे विज्ञेया स्वागता हि सा ॥४९॥

यथा—अद्य मे सफलमायननेत्रे ! जीवितं मदनसंश्रयभावम् ।
आगतासि भवनं मम यस्मात्स्वागतं तव वरोरु ! निषीद ॥५०॥

³[षष्ठं च नवमं चैव लघुनी त्रैष्टुभे यदि ।
गुरूण्यन्यानि पादे तु सा ज्ञेया शालिनी, यथा ॥५१॥

दुःशील वा निर्गुणं चापरं वा लोके धैर्यादप्रियं न ब्रवीषि ।
तस्माच्छील साधुहेतोः सुवृत्तं माधुर्यात्स्यात्सर्वथा शालिनी त्वम् ॥५२॥

तृतीयं चैव षष्ठं च नवमं द्वादशं तथा ।
गुरूणि जागते पादे यत्र तत्तोटकं भवेत् ॥५३॥

यदि सोऽत्र भवेत् समुद्रसमस्त्रिषु चापि तथा नियमेन यतिः ।
सततं जगतीविहितं हि ततं गदितं खलु तोटकवृत्तमिदम्] ॥५४॥

यथा—किमिदं कपटाश्रयदुर्विषहं ⁴बहुशाठ्यमयोल्वणरूक्षवचम् ।
स्वजनप्रियसज्जनभेदकरं ननु तोटकवृत्तमिदं कुरुषे⁵ ॥५५॥

⁶[आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च ।
तथोपान्त्यं जगत्या च गुरु सैकुमुदप्रभा ॥५६॥

यो द्वित्री तथा त्यौ यदि खलु पादे षड्भिरेव वर्णैर्यदि च यदि स्यात् ।
नित्यमनिविष्टा जगतिविधाने नामतः प्रसिद्धा कुमुदनिभा सा ॥५७॥

---

दूरवर्जितं प्रियं न कृतम् । हे सुभट, किं त्वया कृतम् (दूरत्यक्तमित्यर्थः ?) पुन इत्याह यत्पलायनेति ॥४७॥ मदनसंश्रयो भावो यस्य कामफलमिति यावत् ॥५०॥
किमिदमिति तोटकस्य छेदकस्य वृत्तं चेष्टितम् ॥५५॥

---

१. KSS, NS do not read
२. NS. गुरूणि त्रैष्टुभे पादे ।
३ NS does not read.
४. KSS, बहुगर्जमिवोद्गुणरक्षवचम् । NS. बहुगर्वमिवोल्वणरक्षवचम् ।
५. NS प्रकुरु ।
६. NS does not read.

यथा—मन्मथेन विद्धा सलिलनिभावा नृत्तगीतयोगा प्रविकम्पिताक्षी।
निशमय किं ? त्वं विगलितशोभा चन्द्रपादयुक्ता कुमुद्वती च ॥५८॥

मतान्तरे—यदि खलु पादे न्यौ त्रिकौ यथा यौ यतिरपि वर्णैः षड्भिरेव चेत्स्यात्।
जगति विधाने निन्दमतिविष्टा कुमुदनिभा सा नाम्नः प्रसिद्धा ॥५९॥

यथा—कुमुदनिभा त्वं कामबाणविद्धा किमसि ? नतभ्रू शीतवाततप्ता।
मृदुनलिनीवापाण्डुवक्त्रशोभा कथमपि जाता ह्यद्य नः सखीनाम् ॥६०॥

द्वादशाक्षरके पादे सप्तमं दशमं लघु।
आदौ पञ्चाक्षरच्छेदश्चन्द्रलेखा सा यथा ॥६१॥

यत्र सौम्य ते पद्मपत्रायताक्ष कामरागाभं सुनासोच्चप्रहासम्।
कामस्यापीड कामनागेन्द्रकान्ते ' कान्त्या त्वं चन्द्रलेखेव भासि] ॥६२॥

तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु।
द्वादशाक्षरके पादे यत्र सा प्रमिताक्षरा ॥६३॥

यथा—स्मितभाषिणी[1] ह्यचलसाध्यगवा निभृतायतार्थविमुखी[2] सततम्।
यदि कस्यचिद्युवतिरस्ति सुखा प्रमिताक्षरा स हि पुमान्जयति[3] ॥६४॥

द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे।
गुरूणि द्वादशे पादे यदास्या जगती तु सा ॥६५॥

[4][यदि त्रिकौ न्जौ भवतस्तु पादतस्तथैव च व्यायवसानमस्थितौ।
तदा हि वृत्तं जगतीप्रतिष्ठितं वदन्ति वंशस्थमितीह नामतः] ॥६६॥

न मे [5]प्रिया त्वं बहुमानवर्जिता प्रिय प्रिया ते परुषाभिभाषिणी।
तथा च पश्याम्यहमद्य विग्रहं ध्रुवं हि [6]वंशस्थगतिं करिष्यति ॥६७॥

---

मन्मथेनेति नृत्तगीतयुक्ता न भवतीति भावः ॥५८॥

स्मितेति। प्रमिताक्षरा भण्यते, या स्मितभाषित्वादिगुणयुक्ता सा शस्ता सुमुखी युवतिरपि कस्यचिद्भवेदिति शेषः ॥६४॥

---

१. NS. ह्यमिनी।
२. NS. विमुखा।
३. NS. वर्णाः।
४. KSS., NS. do not read.
५. NS. प्रिय।
६. KSS., वनस्पर्ति NS. वल्कपदा।

चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु ।
भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता[1] ॥६८॥

परुषवाक्यकशाभिहता[2] त्वया भयविलोकनपार्श्वनिरीक्षणा ।
वरतनु प्रततप्लुतसर्पणैरनुकरोति गतैर्हरिणप्लुतम्[3] ॥६९॥

सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे कामदत्तेति सा यथा[4] ॥७०॥

करजपदविभूषिता यथा त्वं सुदति ! दशनविक्षताधरा च ।
गतिरपि [5]चरणावलग्नमन्दा त्वमसि मृगनिभाक्षि ! कामदत्ता ॥७१॥

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु ।
पादे तु जागते यस्या अप्रमेया तु सा यथा ॥७२॥

न ते काचिदन्या समा दृश्यते स्त्री नृलोके विशिष्टा गुणैरद्वितीयैः ।
त्रिलोक्यां गुणाढ्यान् समाहृत्य सर्वान् जगत्यप्रमेयाऽसि सृष्टा विधात्रा ॥७३॥

द्वितीयं पञ्चमं चैव ह्यष्टमैकादशे तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा ॥७४॥

[6][रसित्रका सागराख्या निविष्टा यदा स्यात् त्रिके च त्रिके मुक्तरूपा यतिः ।
सन्निविष्टा जगत्यास्ततस्ता बुधैर्नामतश्चापि सङ्कीर्त्यते पद्मिनी] ॥७५॥

देहतोयाशया वक्त्रपद्मोज्ज्वला नेत्रभृङ्गाकुला दन्तहंसस्मिता ।
केशपाशच्छदा चक्रवाकस्तनी पद्मिनीव प्रिये भासि मे सर्वदा ॥७६॥

[7][फुल्लपद्मानना त्वं द्विरेफेक्षणा केशपत्रच्छदा चक्रवाकस्तनी ।
पीतनीयावली बद्धकाञ्चीगुणा पद्मिनीव प्रिये ! भासि नीरे स्थिता ॥७७॥

आदौ षट्दशमं चैव पादे यत्र लघून्यथ ।
शेषाणि तु गुरूणि स्युर्जगते पुटसंज्ञिता] ॥७८॥

---

परुषेत्यादि । भवन्त्यरुपवाक्यरूपया कशया अभिहता वरतनुर्हरिणप्लुतमिव करोति ॥६९॥

---

१ NS. हरिणीप्लुता ।
२ NS. हिता ।
३. NS. हरिणीप्लुतम् ।
४. KSS. स्मृता ।
५. NS. चरणारविन्दमन्दा ।
६. NS does not read.
७. NS does not read.

यदि चरणनिविष्टो नो तथा स्यो यतिविधिरपि पुष्पाप्टाभिरिष्ट ।
भवति च जगतीयं सर्वदासौ च इह हि पुटवृत्त नामतस्तु ॥७९॥
उपवनसलिलानां बालपद्मभ्रमरचरनूनानां मध्यनादं ।
भवनमदविलासे कामिनीनां कथयति पुटवृत्त पुष्पमास ॥८०॥
[1]द्वितीयान्त्ये चतुर्थं च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्यां तु चतुर्भि सा प्रभावती ॥८१॥
कथ मिव कमलविशाललोचने[1] सह धनं शिशिरकरे दिवाकरे[2] ।
अचिन्तयन्त्यभिनवपर्णविद्युत-स्त्वमागता सुतनु[1] यथा प्रभावती ॥८२॥
ग्रीष्मादावष्टम चैव दशमं नैधनत्रयम्[3] ।
गुरूण्यतिजगत्यां तु त्रिभिश्छेदं प्रहर्षिणी ॥८३॥
भावस्थैर्मधुरकथं सुभाषितैस्त्व साटोपस्खलितविलम्बितैर्गतैश्च ।
शोभाढ्यैर्हरसि मनांसि कामुकानां सुव्यक्त ह्यतिजगती प्रहर्षिणी च ॥८४॥
षष्ठं च सप्तमं चैव दशमैकादशे लघु ।
त्रयोदशाक्षरे पादे शेषं मत्तमयूरकम् ॥८५॥
विद्युन्नद्धा सेन्द्रधनरञ्जितदेहा वातोद्धूता श्वेतबलाकाकृतशोभा ।
एते मेघा गर्जितनादोज्ज्वलचिह्ना प्रावृट्काले मत्तमयूरा कथयन्ति ॥८६॥
आद्यौ द्वे चतुर्थं चाष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्वर्यां वसन्ततिलका यथा ॥८७॥

चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचनासुविभूषिताङ्गी ।
नानावतंसकविभूषितकर्णपाशा[4]
साक्षाद्वसन्ततिलकेव विभाति नारी ॥८८॥

उपवनेति । पुटस्य मुकुलस्य वृत्त तथा चोपवन मलिन चरि सुम, एवमन्यत् ॥७९।८०॥

चित्रैरिति । वसन्तस्य वनितास्वस्तव्यापि उपमान स्वनेनेति । साक्षादिति । छन्दानुवर्तिनीत्यर्थं ॥८८॥

---

१. KSS, NS द्वितीय च चतुर्थं च ।
२ KSS, NS निशाकरे ।
३ KSS, NS नैधन तथा ।
KSS., NS. विविभूषितकर्णपाशौ ।

पञ्चादौ शक्वरी पादे गुरूणि त्रीणि नैधने[1]।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा यथा[2] ॥८९॥

यथा—मानालोकज्ञः सुनवलकुलशीलाढ्यो
यस्मिन्सम्मान न सदृशमनु पश्येद्धि।
गच्छेत्तं त्यक्त्वाश द्रुतगतिरपर देशं
कीर्णा नानार्यैरवनिरियमसंबाधा ॥९०॥

चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा।
अन्त्योपान्त्ये च शक्वर्या पादे तु शरभा यथा ॥९१॥

यथा—एषा कान्ता व्रजति ललिता वेपमाना
गुल्मैश्छन्नं वनमभिनवैः सम्प्रविद्धम्।
हा हा कष्टं किमिदमिति नो वेद्मि मूढो
[3]व्यक्तं कान्ते ! शरभललितान्वं करोषि ॥९२॥

आदौ षट् दशमं चैव लघु चैव त्रयोदशम्[4]।
यत्रातिशक्वरे पादे ज्ञेया नान्दीमुखी तु सा ॥९३॥

यथा—न खलु तव कदाचित्क्रोधताम्रायताक्ष
भ्रुकुटिवलितभङ्गं दृष्टपूर्वं मयास्यम्।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
रमसि मधुरवाक्या देवि ! नान्दीमुखीव ॥९४॥

[5]आद्यं चतुर्थं षष्ठं च नैधनं च यदा गुरु।
षोडशाक्षरके पादे यत्रेभललितं तु तत् ॥९५॥

[[6]त्री यदि नाद्यं नित्यमिह विरचितचरणः
गरुच तथा च वै भवति निधनमुपगतः।
स्यादपि चाष्टिमेव यदि सततमनुगत
तत्खलु वृषभगजविलसितम्] ॥९६॥

नान्दीमुखीति नान्द्या मङ्गलदुन्दुभेरिव मुखं यस्याः ॥९४॥

---

१. KSS., NS. चान्तनः।
२. NS. स्मृता।
३. KSS, NS. व्यक्तं कोपाच्छरभललितं वर्तुकामा।
४. KSS. लघूनि स्युस्त्रयोदश।
५. ग्रन्थान्तरेषु बहुधा भिद्यते।
६. NS. does not read.

कालतोयधरं[1] सुधीरघनपटुपटहरवं[2]
सजंकदम्बनीपकुटजकुसुमसुरभि ।
कन्दलसेन्द्रगोपकरचितमवनितल
वीक्ष्य करोत्यसौ वृषभगजविललसितम् ॥९७॥

आद्यात्पराणि वै पञ्च द्वादश सत्रयोदश ।
[3]अन्त्योपान्त्ये च दीर्घाणि ललितप्रवर हि तत् ॥९८॥

[यदा म्भौ पादस्थौ भवत इह चेत्सौ तथा गौ
तथा षड्भिश्चान्त्यैर्यतिरपि च वर्णैर्यदा स्यात् ।
तदप्यष्टौ नित्यं समनुगतमेवोक्तमन्यं
प्रयोगज्ञं वृत्तं प्रवरललित नामतस्तु] ॥९९॥

यथा—नखालीढ गात्र दशनखचित चोष्ठगण्ड
शिरः पुष्पोन्मिश्रं प्रविलुलितकेशालकान्तम् ।
गतिः खिन्ना चेयं वदनमपि सम्भ्रान्तनेत्र
अहो श्लाघ्यं वृत्तं प्रवरललित कामचेष्टम् ॥१००॥

आद्यात्पराणि पञ्चाथ द्वादश सत्रयोदशम् ।
अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि च ॥१०१॥

[चतुर्भिस्तस्यैव प्रवरललितस्य प्रियगणै
यदा सौ गश्चान्ते भवति चरणेष्वष्टिगदिते ।
यदा षड्भिश्छेदो भवति यदि मार्गेण विहित
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता] ॥१०२॥

यथा—[4]महानद्या भोग पुलिनमिव ते भाति जघन
तथास्य नेत्राढ्य भ्रमरसहित पङ्कजमिव ।
गतिर्मन्दा चेयं सुतनु ! तव चेष्टा सुललिता
स्तनाभ्यां ताम्राभ्यां शिखरिणि सुरोनागि वनिते ॥१० ॥

यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे ।
षोडशीकादशे चैव तत्स्याद् वृषभचेष्टितम् ॥१०४॥

---

तोयधरैरिति मत एव, या गजोऽपि विलास करोति । इदमिह बोध्यं ॥९७॥

---

१ NS. धरं ।
२ NS. ग .
३. NS. अन्त्ये द्वे च दीर्घाणि प्रवर ललित हि तत् ।
४. NS. महानद्या भोगे ।

[यदि हि चरणे न्सौ स्लौ ग क्रमाद्विनिवेशिताः
 यदि खलु यति षड्भिर्वर्णैस्तथा दशभि पुन ।
यदि विहित स्यादत्यष्टि प्रयोगगुणाश्रयं
 वृषभललित वृत्त ज्ञेय तथा हरिणीति वा] ॥१०५॥

यथा—जलधररव श्रुत्वा श्रुत्वा मदोच्छ्रयदर्पितो[1] ।
विलिखित मही शृङ्गाक्षेपैर्वृष प्रतिनर्दं च ॥
स्वयुवनिवृतो [2]गोष्ठाद्गोष्ठ प्रयाति च निर्भयो[3] ।
[4]वृषभललित चित्र वृत्त करोति च शाद्वले ॥१०६॥

चत्वार्यादौ च दशम गुरु यत्र त्रयोदशम् ।
चतुर्दश तथान्त्ये द्वे चैकादशमथापि च ॥१०७॥
यदा सप्तदशे पादे शेषाणि च लघून्यथ ।
भवन्ति यस्मिन्सा ज्ञेया श्रीधरी नामतो यथा ॥१०८॥

[मो न्नौ च स्युश्चरणरचितास्तौ गुरू च प्रविष्टौ
 यद्येव शिलष्टो यदि च दशभि स्यात्तथान्यैश्चतुर्भि ।
अत्यष्टौ च प्रतिनियमिता वर्णत स्पष्टरूपा
 सा विज्ञेया द्विजमुनिगणै श्रीधरी नामतस्तु] ॥१०९॥

स्नानैश्चूर्णै सुखसुरभिगन्धवासैश्च धूपै[5]
 पुष्पैश्चान्यै[6] शिरसि रचितैर्वस्त्रयोगैश्च तैस्तै ।
नानारत्नै कनकरचितैरङ्गसम्भोगसस्थै
 र्व्यक्त कान्ते ! कमलनिलया[7] श्रीधरीवातिभासि ॥११०॥

आद्य चतुर्थं षष्ठ च दशम नैधन गुरु ।
तद्वंशपत्रपतित दशभि सप्तभिर्यति. ॥१११॥

१. NS., दीप्तम्मरोत्सवजालितो KSS. गर्जन् मदोच्चयदर्पितो ।
२. KSS गोष्ठीपगोष्ठ ।
३. KSS. नो भिया ।
४. KSS. ललितमृषभः ।
५. KSS. गन्धुलैर् सुधूपै । NS. गन्धमादैश्च धूपै ।
६. NS. माल्यै. ।
७. NS निलये ।

यथा एष गभीरद्रिमस्तकतटे कलभपरिवृत.
क्रीडति वृक्षगुल्मगहने कुसुमभरनते ।
मेघरव निशम्य मुदित पवनजवसम[1]
सुन्दरि ! घनपवनतित पुनरपि कुरुते ॥११२॥

द्वितीयमन्त्य षष्ठ चाप्यष्टम द्वादश तथा ।
चतुर्दश पञ्चदश पादे सप्तदशाक्षरे ॥११३॥
भवति यत्र दीर्घाणि शेषाणि च लघून्यथ ।
विलम्बितगति सा तु विज्ञेया नामतो यथा ॥११४॥

[यदा द्विरुदितो हि पादमभिसंस्थितो जसौ त्रिको
तथैव च पुनस्तयोर्निधनमाश्रितो यो लगौ ।
तदाप्युदितपूर्विका यतिरपि स्वभावाद्यथा
विलम्बितगतिस्तदा निगदिता द्विजैर्नामत.] ॥११५॥

यथा विघूर्णितविलोचना पृथुविकीर्णहारा[2] पुन
प्रलम्बरशना [3]चलत्स्खलितपादमन्दक्रमा ।
न मे प्रियमिद जनस्य बहुमानरागेण य
न्मदेन विवशा विलम्बितगति. कृता त्व प्रिये ! ॥११६॥

पञ्चाद्यौ पञ्चदशक द्वादशैकादशे गुरु[4] ।
चतुर्दश [5]तथान्त्ये द्वे चित्रलेखा धृतौ स्मृता ॥११७॥

यथा नानारत्नाढ्यैर्बहुभिरधिक भूषणैरङ्गसस्थै
र्नाना गन्धाढ्यैर्मदनजनकैरङ्गरागैर्विचित्रै ।
[6]केशै स्नानाढ्यै कुसुमभरितैर्वस्त्ररागैश्च तैस्तै
कान्ते ! [7]सक्षेपात् किमिह बहुना चित्रलेखेव भासि ॥११८॥

अत्य सप्तदश चैव षोडश सचतुर्दशम् ।
त्रयोदश द्वादश च षष्ठमष्टममेव च ॥११९॥

---

१. KSS. मुदितपवनजववशात् ।
२. KSS. विघूर्णहारा ।
३. NS. स्खलत् ।
४. NS द्वादश मानुर्य गुरु ।
५. NS. तथा पञ्च ।
६. KSS. स्नानार्द्रै कुसुमरचितैर्वस्त्ररागैश्च तैस्तै ।
७. NS. सर्वेण किमिति ।

ग्रीष्मादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि शार्दूलविक्रीडितं तु तत् ॥१२०॥
[म्सौ जसौ तौ गुरु च प्रयोगनियता यस्मिन्निविष्टास्त्रिका
आद्या चान्त्ययतिश्चतुस्त्रिकयुता ज्ञेया परा सप्तभिः ।
नित्यं यत्पदमाश्रिता द्युतिधृतिर्नित्यं कवीनां प्रियं
तज्ज्ञेयं खलु वृत्तजातिनिपुणः शार्दूलविक्रीडितम्] ॥१२१॥

यथा—नानाशस्त्रशतघ्नितोमरहता भग्नप्रविद्धायुधा
निर्भिन्नोदर[1]पादबाहुवदना निर्भर्त्सिताः शत्रवः ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणैः
वृत्तं ते रिपुघाति भाति समरे शार्दूलविक्रीडितम् ॥१२२॥

[तावत्त्वं विजितेन्द्रिय शुभमते सर्वात्मना प्रत्यहं
दाने शीलविधौ च योजय मनः स्वर्गापवर्गावहम् ।
यावद् व्याधिजराप्रचण्डनखरो व्यायस्सटाभिर्दृढः
मृत्युस्ते न करोति जीवितमृगे शार्दूलविक्रीडितम्] ॥१२३॥

चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् ।
तथा पञ्चदशं चैव षोडशं नैधनं तथा ॥१२४॥
एतानि च गुरूणि स्युः शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना सुवदना तु सा ॥१२५॥
[म्रौ म्नौ यभौ लगौ च सम्यग्यदि च विरचिताः पादे क्रमवशात्
विच्छेदः सप्तभिः स्यात्पुनरपि च यतिः सप्ताक्षरकृता ।
यद्येषा संश्रिता स्यात्कृतिमपि च पुनः श्लिष्टाक्षरपदा
विद्वद्भिर्वृत्तजातौ तत इह गदिता नाम्ना सुवदना] ॥१२६॥

यथा—नेत्रे लीलालसान्ते कमलदलनिभे भ्रूचापविनते[2]
[3]रक्तोष्ठं पीनमध्यं समसहितघना: स्निग्धाश्च दशना ।
[4]कर्णावंसप्रलम्बौ चिबुकमपि नतं घोणा सुरुचिरा
ह्यस्त्र त्वं मर्त्यलोके वरतनु ! विहितास्येन सुवदना ॥१२७॥

चत्वार्याद्यौ तथा षष्ठं सप्तमं च चतुर्दशम् ।
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः ॥१२८॥

---

१. NS. हस्त । KSS बाहुवक्त्रनयना निर्भर्त्सिता ।
२. NS. निहिते ।
३. NS. गण्डोष्ठं ।
४. NS. कर्णौ पार्श्वावलम्बौ ।

अन्त्योपान्त्ये गुरुण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥१२९॥

[म्रौ न्यौ यौ यस्य सम्यग्यदि हि विरचिता सुश्लिष्टा पादयोगे
वर्णे पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् ।
वृत्तं सम्यग्यदि स्यात्प्रकृतिमनुगतं तत्त्वविद्भिः प्रदिष्टं
विज्ञेयं वृत्तजातौ कविजनदयिता स्रग्धरा नामतस्तु] ॥१३०॥

यथा—चूताशोकारविन्दं कुरवकतिलकं कर्णिकारं शिरीषं
पुन्नागं पारिजातं वकुलकुवलयं किंशुकं सातिमुक्तं ।
एतैर्नानाप्रकारं बहुलसुरभिभिप्रकीर्णैश्च तलं
वासितं पुष्पवृन्दैर्नरवर ! वसुधा स्रग्धरेवाद्य भाति] ॥१३१॥

चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥१३२॥

द्वाविंशत्यक्षरे पादे शेषाणि च लघून्यथ ।
भवति यत्र तज्ज्ञेयं भद्रकं नामतो यथा ॥१३३॥

[भ्रौ चरणे यदा विनियतौ भ्रियौ क्रमवशाद्यथाकृतिविधौ
ग्रौ च ततः परं च रचिताविरतान्तरकृतौ नगावपि पुनः ।
तच्च दशाष्टवर्णरचिता चतुष्वपि तथा यतिश्च सततं
भद्रकवृत्तमेव तत्तु नाट्ययोगकुशलैर्बुधैर्निगदितम् ॥१३४॥

[1]उत्प्लुतभैरवहस्तचरण द्वितीयकरेचित[2]
पतमृदङ्गवाद्यमधुरं विचित्रकरणान्वितं बहुविधम् ।
मदरमेतदद्य सुभगे ! विदग्धगतिचेष्टितं सुललितं
नृत्यसि विभ्रमाङ्गपरं विचित्रकरसाभिनयं गजगमने ! ॥१३५॥

आद्यमेकोनविंशं च सप्तमं सत्रयोदशम् ।
एकादशं सप्तदशं पञ्चमं च गुरूण्यथ ॥१३६॥

शेषाणि च लघूनि स्युर्विंशत्यक्षरके बुधः ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥१३७॥

[यदि च नकार आदिरचितः परे विरचितौ तत एव च सगौ
यदि च जगौ विधौ च निहितौ क्रमेण यदि नु मध्यावपि तथा ।
यदि च समाश्रितं हि निहितं पतिश्च दशभिश्चतुर्भिरपि
ततः इह कीर्तितं मुनिगणैर्विबुधैरपीतद्श्वललितम्] ॥१३८॥

---

१. KSS., उत्पुल्ल NS. उन्नत ।
२. NS. गलित ।

[1]विविधतुरङ्गनागरथयोधसकुलमलं बल समुदित
शरशतशक्तिकुन्तपरिघासियष्टिचितत [2]बहुप्रहरणम् ।
रिपुशतमुक्तशस्त्ररवभीतशङ्कितभट भयाकुलदिश
कृतमभिवीक्ष्य सपुगमुखे समर्पितगुण त्वयाऽवललितम् ॥१३९॥

षडादावष्टम चैव ह्येकादशचतुर्दशे ।
विंश सप्तदश चैव त्रयोविंश तथैव च ॥१४०॥

एतानि च लघूनि स्यु शेषाण्यथ गुरूणि च ।
चतुर्विंशतिके पादे मेघमालेति सा यथा ॥१४१॥

[3][यदि खलु चरणस्थतौ नौ त्रिको कृतिकाख्यास्तया रा स्यु क्रमाद्
भवति यदि यतिस्तथा सप्तभि सप्तभिस्त्रिभ्चतोऽन्या यति पञ्च विद्यात्तया ।][4]
पवनबल[5]समाहुता [6]तीव्रगम्भीरनादा बलाकावलीमेखला
क्षितिधरसदृशोच्चरुपा महानीलधूमाञ्जनाभाम्बुगर्भोद्भवा[7] ।
सुरपतिधनुरुज्ज्वलाबद्धकक्ष्या[8] तडिद्द्योतसन्नाहपट्टोज्ज्वला[9]
[10]गगनतलविसारिणी प्रावृषेण्या दृढ मेघमालाधिक शोभते ॥१४३॥

आद्य चैव चतुर्थं च पञ्चम षष्ठमेव च ।
नवम दशम [चैव नैधन हि च भवेद् गुरु[11] ॥१४४॥

लघून्यथानि शेषाणि पादे स्यु पञ्चविंशके ।
वृत्तज्ञै सा तु विज्ञेया क्रौञ्चपादीति नामत ॥१४५॥

---

१. KSS. रथहयनागयोधपुरुषै. ।
२. KSS निवृत ।
३. NS. does not read.
४. GOS. reads after this—
सततमभिनिविष्टदेहा तथा सकृतौ सूरिभि सर्वदा दृश्यते ।
तत्र हि परिभाषिता शास्त्रविद्भिस्त्विय मेघमाला यथा दण्डकः ।
५. NS. जव ।
६. KSS तीव्रनादा वालाकावली मेखला शोभिता ।
७. NS क्षितिधरसदृशोर्ध्वरूपा महाधूमपुञ्जायमानाम्बुगर्भोद्भवा ।
८. NS. शोभा ।
९. NS. वन्योज्ज्वला ।
१०. NS., गगनतलविचारिणी प्रावृषि प्रोन्नता । KSS. प्रावृषेण्योन्नता ।
११. KSS., NS अन्त्य चैव गुरुण्यथ ।

[1][म्नौ यदि पादे स्मायपि चेष्टावमिहतिरपि च हि यदि खलु विहिता
नान्त्य समुद्रा स्तुविनिविष्टा यदि च खलु गुरु भवति निधनगनम् ।
पञ्चनिरासौ देवसुपेना पुनरपि यतिरिह यदि खलु कदापि
क्रौञ्चपदेयं वृत्तविधाने सुरगणपितृगणमुनिगणविहिता] ॥१४६॥

य किल दाश विद्रुतमोम क्रतुवरमखमनमरगतस्तन ।
पातितपूर क्षिप्तकपाल विचयनमर्मभिधमखपुरचरकम् ॥
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणपितृगणमिथुना ।
नित्यमसौ ते दैत्यगणारि प्रदहतु मन्मथमिव रिपुगणमखिलम् ॥१४७॥

[2][या कपिलाक्षी पिङ्गलकेशी
कलिरुचिरनुदिनमनुनयकठिना
दीर्घतराङ्गि स्थूलशिराङ्गि
परिवृत्तवपुरनिशमकुटिलगति ।
आयतजङ्घा निम्नकपोला
लघुतरकुचयुगपरिगतहृदया
सा परिहार्या क्रौञ्चपदा स्त्री
ध्रुवमिह निरवधि सुखमभिलषता] ॥१४८॥

अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशकम्
एकविंश च विज्ञेयं चतुर्विंशं सनैधनम् ॥१४९॥

एतानि गुरु मस्त्यानि शेषाणि च लघून्यथ[3] ।
[4]षड्विंशत्यक्षरे पादे तद्भुजङ्गविजृम्भितम् ॥१५०॥

[5][मस्यां मौ तौ ना सौ नित्यं प्रतिचरणमथ
गदितकारिणिका] लघुपूर्वश ।
षड्विंशत्यक्षराणां च यदि हि
खलु यतिरमिधा वसुभिरथाप्तर्भिः ॥

---

रूपोपेतामिति । भुजङ्गविजृम्भितं वृत्तं भगवतो हस्ते व्यस्तम् ॥१५०।१५२॥

---

१. KSS, NS. *do not read*
२. NS. does not read
३. KSS, NS. पादे षड्विंशकाक्षरे ।
४ KSS. NS. यत्र मात्रा तथा क्षेत्र ।
५. KSS, NS. do not read.

पश्चादन्त्यौ लौ सयोज्यौ यदि भवति
मनुजदयिता समाश्रितमुत्कृतिं
नाम्ना वृत्त लोके ख्यात कविवदन-
विकसनपर भुजङ्गविजृम्भितम्] ॥१५१॥

यथा—रूपोपेता देवं सृष्टां समदगज-
विलसितगतिं निरीक्ष्य तिलोत्तमां
[1]प्रादक्षिण्यात्प्राप्तां द्रष्टुं बहुवदन—
मचलनयन शिर कृतवान् हरि ।
दीर्घं निश्वस्यान्तर्गूढं स्तनवदन-
जघनरुचिरां निरीक्ष्य तथा पुन:
[2]पृष्ठे न्यस्त देवेन्द्रेण प्रवरमणि-
कनकवलय भुजङ्गविजृम्भितम् ॥१५२॥

[दण्डक नामविज्ञेयमुत्कृतेरधिकतरम्
मेघमालादिक तत्स्यान्नौ चाधौ कागुहा त्रिका ]

यथा—मुदितजनपदाकुला स्फीतसस्याकरा भूतधात्री भवन्त समभ्यर्चति
द्विरदकरविलुप्तहिन्तालतालीवनास्त्वा नमस्यन्ति विन्ध्यादय. पर्वता
स्फुटितवलयदन्तु[3]रितनिर्गीर्णमुक्ता फलैर्मिश्रस्तैर्नमस्यन्ति च सागरा
मुदितजलचराकुला सप्रकीर्णामला कीर्तयन्तीव कीर्ति महानिम्नगा ] ॥१५४॥

एतानि समवृत्तानि मयोक्तानि द्विजोत्तमा ।
विषमार्धसमाना तु पुनर्वक्ष्यामि लक्षणम् ॥१५५॥
यत्र पादास्तु विषमा नानावृत्तसमुद्भवा. ।
ग्रथिता पादयोगेन तद् वृत्त विषम स्मृतम् ॥१५६॥
द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा ।
सर्वपादैश्च विषमैर्वृत्त विषममुच्यते ॥१५७॥

---

नानावृत्तसमुद्भवा इत्यनेन तुल्यच्छन्दसा वृत्तानां लक्षण पृथक् पृथक् पादे विरचय्य स्वय विषमता ज्ञेया इत्याह ॥१५६॥

द्वौ समाविति प्रथमतृतीयौ द्वितीयचतुर्थौ । द्वौ विषमाविति प्रथमद्वितीयौ तृतीयचतुर्थौ, वीप्सागर्भमेतद् द्वाविति ॥१५७॥

---

१. NS. प्रादक्षिण्य प्राप्ता⋯ ⋯। KSS. प्राप्त द्रष्टु बहुवदननयनमहिता निरस्तुनवान्हर ।
२. NS पृष्ठे ।
३. KSS, NS गुम्फीर्णमुक्ताफलै ।

 

ह्रस्वाद्यमथ दीर्घाद्य दीर्घं ह्रस्वमथापि या ।
युग्मोजविषमं पादं¹ वृत्तमर्धसमं भवेत् ॥१५८॥

पादे सिद्धे समं सिद्ध विषमं सायपादिकम् ।
द्वयोरर्धसमं विद्याद्वेय छेदस्तु पादतः ॥१५९॥

छेदस्तु ये मया प्रोक्ता समवृत्तविकल्पित ।
त्रिकं विषमवृत्तानां सम्प्रवक्ष्यामि लक्षणम् ॥१६०॥

[नैधनेऽन्यतरस्यां वै प्रथमे पाद इष्यते ।
द्वितीये चरणे च स्यादित्यनुष्टुप् समासतः] ॥१६१॥

सो गो तु प्रथमे पादे स्रौ ल्गौ चापि द्वितीयके ।
²युग्मेऽर्धविषमे पादे ज्ञेया पथ्या तु सा त्रिके ॥१६२॥

प्रियवंयतमिथ्याऽसि प्रियसचघिवाग्यथा ।
³प्रियवानरता पथ्या ⁴वनिते ! त्व प्रियासि मे ॥१६३॥

[स्रौ गौ तु प्रथमे पादे स्रौ ल्गौ च द्वितीयके ।
पादे भौ ल्गौ तृतीये च चतुर्थे तु तसौ लगौ ॥१६४॥

नैवाचारो न ते मित्र न मवग्धिगुणप्रिया ।
सर्वथा सर्वविषमा पथ्या न भवसि प्रिये !] ॥१६५॥

⁵अयुजोर्लक्षणं ह्येतद्विपरीतं तु यत्र च ।
पथ्या हि विपरीता सा विज्ञेया नामतो यथा ॥१६६॥

⁶कृतेन रमणस्य किं सखि ! रोषेण तेऽधुना ।
विपरीता न पथ्यासि त्वं जडे ! केन मोहिता ॥१६७॥

---

सिद्ध इति लक्षिते। सर्वपादिकमिति सक्षणोर्यभिति छेद द्वयोरित्यनापि। छेद इति पादेषु विभाग इत्यर्थः ॥१५९॥ समवृत्तविकल्पेन समवृत्तेषु विकल्पिता ये विभागच्छेदास्ते प्रोक्ता ॥१६०॥

---

१. KSS., NS. तद्वृत्तमसमं स्मृतम् ।
२. KSS., NS. एव युग्मौजको ज्ञेयो पथ्यावृत्ते त्रिके यदा ।
३. KSS. प्रियदानरता ।
४. KSS., यद्यपि NS. दयिता ।
५. KSS. युग्मयो. ।
५. KSS., NS. omits.

चतुर्थादक्षरादत्र विलघु स्यादयुक्तत. ।
अनुष्टुप्चपला सा तु विज्ञेया नामतो यथा ॥१६८॥

न खल्वस्याः प्रियतम श्रोतव्य व्याहृत सत्या ।
नारदस्य प्रतिकृति कथ्यते चपला ह्रीयम् ॥१६९॥

विपुला तु युजि ज्ञेया लघुत्वात्सप्तमस्य तु ।
[1]सर्वत्र सप्तमस्यैव कैषाचिद्विपुला यथा ॥१७०॥

संक्षिप्ता वज्रमध्ये हि हेमकुम्भनिभस्तनी ।
विपुलाऽसि प्रिये ! श्रोण्यां पूर्णचन्द्रनिभानने ! ॥१७१॥

गङ्गेव मेघोपगमे आप्लावितवसुन्धरा ।
कूलवृक्षानारुजन्ती स्रवन्ती विपुला बलात्[2] ॥१७२॥

[आगता मेघसमये भीरु भीरुकुलोदगते ! ।
एकरात्री परगृह चोरी बन्धनमर्हसि] ॥१७३॥

एव विविधयोगास्तु[3] पथ्यापादा भवन्ति हि ।
युग्मौजविषमं पादैः शेषैरन्यैस्त्रिकैरथ ॥१७४॥

गुर्वन्तक सर्वलघुस्त्रिको नित्य हि नेष्यते ।
प्रथमादक्षरादत्र चतुर्थात्प्राग्लघुः स्मृत[4] ॥१७५॥

पथ्यापादं समारभ्य श्रोण्यन्ते तु गुरुण्यथ ।
भवन्ति पादे सततं बुधैस्तद्यश्रमिष्यते ॥१७६॥

दन्तक्षताधर सुभ्रु ! जागरग्लाननेत्रं च ।
[5]रतिसम्भोगखिन्नं ते दर्शनीयतरं वपुम् ॥१७७॥

[इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते ।
तद्विदां मतवैषम्य त्रिकादक्षरतस्तथा] ॥१७८॥

---

सगुर्वन्त इति गुर्वन्तः स सर्वलघु न, त्रिको नेष्यते । प्रथमादक्षरादनन्तर चतुर्थादक्षरादूर्ध्वं तु प्राग्लघु यकारस्तु नेष्यते । एतानि न प्रयोज्यानि इत्यर्थः ॥१७५॥

---

१. KSS सप्तमस्यैव कैषाचित् विपुलैव तु सा यथा ।
२. NS. विपुलान् बलात् ।
३. NS. योगैस्तु ।
४. KSS लघु स्मृतम् ।
५. KSS. प्रातः सम्भोगखिन्न ते दर्शनीयतम ।

पादे षोडशमात्रास्तु [1]गाथान्तकविकल्पिता ।
चतुर्भिरन्तकर्मैषा युक्तमौपच्छन्दसिका ॥१७ ॥

अनवस्थितपदा सुविह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
क्व यास्यसि वरोरु ! सुरतकाले विषमा किं ? यानवासिका त्वम् ॥१८०॥

[2][रजौ स्गौ च प्रथमे पादे तथा चैव तृतीयके ।
केतुमत्यां यथा प्रोक्ता भौ ग्गौ गश्च सदा युजं ] ॥१८१॥

स्फुरिताधर चञ्चितनेत्र रक्तकपोलमम्बुजदलाभम् ।
किमिव रुषापहृतशोभं केतुमतीसमं वद मुखं ते] ॥१८२॥

वक्त्रस्यापरपूर्वस्य पादौ नौ रो लगौ त्रिकः ।
नजौ रजौ द्वितीये च ज्ञेयाः पुनरेव तु ॥१८३॥

[प्रथमे च तृतीये नौ रलौ गश्च प्रकीर्तितः ।
गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः ] ॥१८४॥

सतनु ! जलपरीतलोचनं जलदनिरुद्धमिवेन्दुमण्डलम् ।
किमिदमपरवक्त्रमेव ते शशिवदनेऽद्य मुखं पराङ्मुखम् ॥१८५॥

नौ यौ तु प्रथमे पादे न्जौ ज्रौ गश्च तथापरे ।
यत्र तत्पुष्पिताग्रा स्यादेवं शेषं तु पूर्ववत् ॥१८६॥

पवनबलविधूतचारुशाख-
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकरपरिगीयमानशब्दं
वरतनु ! पश्य वनं सुपुष्पिताग्रम् ॥१८७॥

स्जौ स्लौ पादौ यथा स्लौ ज्गौ म्नौ ज्लौ गश्च तथा पुनः ।
स्जौ स्जौ गश्च त्रिकं ह्येते उद्गतायां प्रकीर्तिताः ॥१८८॥

तव रोमराजिरतिभाति सुतनु ! मदनस्य मञ्जरी ।
नाभिकमलविवरोत्पतिता भ्रमरावलीव कुसुमात्समुद्गता ॥१८९॥

स्जौ स्लौ च ततो न्सौ ज्गौ नौ सौ चेति तृतीयके
स्जौ स्जौ गश्च चतुर्थे तु ललितायां यथा स्मृताः ॥१९०॥

*ललिताकुलभ्रमितचारु वसनकरवालपल्लवा ।
प्रविकसितकमलकान्तिमुखी प्रविभाति देवी सुरतश्रमातुरा ॥१९१॥*

---

१. KSS. मिश्रावर ।
२ अत्र परमेतादृशानि ग्रन्थान्तरेषु न सन्ति ।

एवमेतानि वृत्तानि समानि विषमाणि च ।
[1]नाटकाद्येषु काव्येषु प्रयोक्तव्यानि सूरिभिः ॥१६२॥

सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पिण्डशः ।
न च तानि [2]प्रयोज्यानि न शोभां जनयन्ति हि ॥१६३॥

यान्यत्र प्रतिपिद्धानि गीतके तानि योजयेत् ।
[3]ध्रुवायोगे तु वक्ष्यामि तेषां चैव विकल्पनम् ॥१६४॥

वृत्तलक्षणमेव तु[4] समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्याणामपि लक्षणम् ॥१६५॥

पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्या पञ्च प्रकीर्तिताः[5] ॥१६६॥

[आसां तु सप्रवक्ष्यामि यतिमात्राविकल्पनम् ।
लक्षणं नियमं चैव विकल्पगुणसंश्रयम् ॥१६७॥

यतिश्छेदस्तु विज्ञेयश्चतुर्मात्रो गणः स्मृतः ।
द्वितीयान्त्यौ युजौ पादावयुजौ त्वपरौ स्मृतौ ॥१६८॥

गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यो युग्गणस्तु यथेप्सितः ॥१६९॥

[6]षष्ठो वै द्विविकल्पस्तु नैधनो ह्येकसंस्थितः ।
[7]पश्चार्धे तु षष्ठः स्यादेकमात्रस्तु[8] केवलः ॥२००॥

---

ननु हतशोभानीति चेत् क्व प्रयोज्यानीत्याह-यान्यत्र प्रतिपिद्धानीति । गीते पठ्यमानत्वाभावात् न वृत्तगता मध्यनापेक्षेति केवलं तालयोजनार्थं साम्यमवश्यं कर्तव्यमिति मात्राणां वर्णानां नियमस्तत्राश्रीयते ॥१६३।१६४॥

---

१. KSS नाटकादिषु ।
२. NS. मयोक्तानि ।
३. KSS., NS. ध्रुवाविधाने व्याख्यास्ये ।
४. KSS., NS. एतत्तु ।
५. KSS. पञ्चविधाः स्मृताः ।
६. KSS., षष्ठस्य NS. षष्ठश्च ।
७. KSS, पश्चार्धे NS. पश्चाद्धा ।
८. KSS, NS. एकमात्रः स उच्यते ।

द्विविकल्पस्तु षष्ठो यो गुरुमध्यो भवेत्तु सः ।
[1]तया सर्वलघुश्चैव यतिसंज्ञासमाश्रिता ॥२०१॥
[2][द्वितीयादिलघुर्ज्ञेय सप्तमे पञ्चमे यतिः ।
प्रथमादिरथान्त्ये च पञ्चमे वा विधीयते ॥२०२॥
गणेषु त्रिषु पादस्य यस्याः पथ्या तु सा भवेत् ।
अतश्च विपुलान्या तु विज्ञेया यतिलक्षणा ॥२०३॥
अयुजः सर्वगुरवो गुरुमध्या गणा युजः ।
यस्याः स्युः पादयोगे तु विज्ञेया चपला हि सा ॥२०४॥
त्रिंशदाद्ये तु विज्ञेया सप्तविंशति चापरे ।
उभयोरर्धयोर्ज्ञेयो मात्राविश्लो विभागतः ॥२०५॥
त्रिंशत्सप्ताश्च यदि स्युरेतानि द्विगुणानि तु ।
शेष्यक्षराणि चान्यानि न्यस्य संख्याविभागतः ॥२०६॥
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः ।
सर्वासां चैवमार्याणामक्षराणां यथाक्रमम् ॥२०७॥
अर्धाष्टमगणार्या च सततार्या प्रकीर्तिता ।
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः ॥२०८॥
पश्चाद्वा यो गणः षष्ठ एकमात्रः स उच्यते ।
द्विविकल्पस्तु यः षष्ठो गुरुमध्यो भवेत्तु सः ॥२०९॥
यथा सर्वलघुश्चैव यतिः सख्यासमाश्रिता ।
सा द्वितीया द्विलघुका सप्तमे प्रथमे यतिः ॥२१०॥
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यः युग्गणस्तु स एव च[3] ॥२११॥

अर्धाष्टमो गणः । अत्र मात्रा गणा गणादत्र । चतुर्मात्रा यस्मात्तादृशार्धः सः स्यात् ॥२०८॥ षष्ठो गणो द्विभेदः । तस्य एकभेदमाह पश्चादर्धो च षष्ठो गणस्तस्मिन् वर्तमाने लघुरेव कर्तव्यस्तस्य स्थाने गुरुमध्यो ज इत्यर्थ ॥२०९॥ सर्वलघु चतुर्लघु-स्तत्र च द्वितीयादारभ्य लघोरेकस्मात् परतस्तस्मात् प्रारभ्य कर्तव्य, अत्र च प्रथमा-दिर्वेति, पञ्चमे च गणे समाप्ते यतिः ॥२१०॥

अयुग्गण इति विषम प्रथमतृतीयपञ्चमसप्तमरूप । युग्मं सम । स एव चेति जगणरूप न सर्वं इति यावत् ॥२११॥

१. NS. यथा ।
२ कोष्ठबद्धपाठा ग्रन्थान्तरेषु न पठिताः ।
३. KSS., NS. समासश्चैव पञ्चम ।

[1]प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥२१२॥

पथ्या यथा—रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी ।
कस्य तु पृथुमृदुजघना तनुबाहु सोदरी पथ्या ॥२१३॥

विपुला यथा—

विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥२१४॥

[2]द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला यथा[3] ॥२१५॥

यथा—उद्भटगामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥२१६॥

पूर्वार्धे लक्षणं ह्येतदस्या रा च मुखेन तु ।
पश्चिमार्धे तु चपला यस्या सा जघनेन तु ॥२१७॥

मुखचपला यथा—

आर्यामुखे तु चपला तथापि चार्या न मे यतः सा किम् ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥२१८॥

जघनचपला यथा—

वरमृगनयने ! चपलासि वरोरु ! शशाङ्कदर्पणनिभास्ये ! ।
कामस्य [4]सारभूते ! न पूर्वमद्याङ्गजघनेन ॥२१९॥

[5]उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि ।
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला सखि ! ॥२२०॥

---

अर्धद्वयेऽपि गणत्रये छेदः कर्तव्यः सैव पाद उच्यते तदाह **प्रथमतृतीयौ पादौ** द्वादशमात्राविति । प्रथमेऽर्धे गणत्रयं प्रथमः पादः । द्वितीयेऽर्धे चान्यद् गणत्रयं तृतीयपादः ॥२१२॥ पथ्येति पथिसाध्वित्यर्थः ॥२१३॥

आर्याणां भेदं दर्शयितुं तत्प्रस्तारमाह ।

---

१ NS varies
२. KSS varies.
३. अत्र परं वाराणसीमुद्रितपुस्तके सार्धचतुष्टयपद्यमधिकम् ।
४ KSS., NS. सारभूतेन ।
५. KSS, NS. vary absolutely.

इनरार्ये ज पष्ठन्तु मलघुगण इष्यते[1] ।
[2]वृत्तैरेव तु विविधैर्नानाछन्दस्समुद्भवैः ॥
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥२२७॥

इति भरतीये नाट्यशास्त्रे [3]छन्दोविचितिर्नाम पञ्चदशोऽध्यायः[4] ।

---

अध्यायार्थमुपसंहरन् भाविनं विषयमामूत्रयति वृत्तैरित्यादि । काव्यबन्धा यत्नेनेदमाह यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः, तद्वत्काव्ये निर्मातव्ये भूमिकल्पः शब्दच्छन्दोविधिः क्षेत्रपरिग्रहं वृत्तममाश्रयमित्यादि विरचयन् भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेशनं गवाक्षवातायनादिदेशीयो दशरूपकविभागः, उपयोगनिरूपणाप्रख्या काक्वादिप्लुतिः, एवमूतवाचिकाभिनयस्वरूपं चतुर्दशादिभिः षड्भिरध्यायैरुच्यते । तत्राध्यायद्वयं वृत्तलक्षणविधानं तु भविष्यति ।

यद्यपि रूपकविरचनकाले परिपक्वप्रज्ञस्य न क्रमप्रतिभासस्तथाप्यपोद्धारधिया कल्प्यत इत्याह । प्रबन्धस्य यो युक्तोऽभ्यासः तन्निष्पत्तिः प्रबन्धाभ्यासः, तत्सपत्तिः अभिनेयार्थनिर्वर्तनं तदभिनयोपारोहणमिति स एव क्रम इत्युपाध्यायः यदाहु —

महाकवीनां पदवीमुपात्तामारुरुक्षताम् ।
नासस्मृत्य पदस्पर्शान्सिपत्सोपानपद्धतिः ॥इत्यादि॥

क्रमोल्लङ्घने हि सति नाटकादिविरचयिता महान्तः प्रमादाधःपाता भवन्ति । न हि सर्वो वाल्मीकिर्व्यासः कालिदासो भट्टेन्दुराजो वा, तेषामपि प्राग्जन्मार्जितकर्माभ्यासमुदितसंस्कारपाटवोत्पादितः कुलप्रतिभङ्गज्ञानातिशय इति शिवम् ॥२२७॥

इति पञ्चदशाध्याये ध्यायिना परमेश्वरम् ।
कृताभिनवगुप्तेन गुप्तार्थ—प्रकटीक्रिया ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां वृत्तविधिर्नाम

पञ्चदशोऽध्यायः ।

---

१. KSS. NS स विकल्पो भवेद्गणः ।
२. NS. एवं चतुर्विधैर्वृत्तैः ।
३. NS. छन्दोवृत्तविधि ।
४. KSS. षोडशोऽध्यायः ।

□□□

अभिनवभारती

विशेषोपयोगितया वृत्त्यङ्गवाचोयुक्तिः, काव्यगतस्यातिप्राशस्त्योपयोगितया महापुरुषगतपाशध्वजादिपादरेखावल्लक्षणशब्दवाच्यता । तदुक्तं तत्रैव—

लक्षणान्येव बीजार्थक्रमनिर्वाहकानि च ।। इति,

प्रतिसन्धिनदङ्गानि फलसिद्ध्युपपत्तितः ।। इति ।

काव्ये धीरोदात्तादिगुणाधान वस्तुवर्णनामङ्गिर्वेति केचित् ।

तदत्र प्रथमपक्षे वर्णनीयप्रधानभूताधिकारिपुरुषगतगुणादिविभाग एव काव्ये पर्यवसीयते । द्वितीयपक्षे तु वर्णनीय, सरल एवेति । वृत्तिलक्षणोऽयं काव्यभेदात् यथा विभज्यते । एवेषा तु दर्शनं—इयेयं, प्रतिभात्मा प्रथमपरिस्पन्दव्यापारव्यवसोपनता गुणा, प्रतिभावन एव हि रसाभिव्यञ्जनसामर्थ्यं माधुर्यादिरूपनिबन्धनसामर्थ्यं न सामान्यवचे. । अनेन शब्देनेद वस्तु वर्णयामीत्येवमूतवर्णनापरपर्यायद्वितीयव्यापारसपाद्यास्त्वलङ्काराः ।

शब्दानमीभि शब्दैरर्थानमीभिरर्थं सघटयामीत्येवमात्मकस्तु यस्तृतीयः कवेः परिस्पन्द तदधीनात्मलाभादिशब्दात्मार्थात्मककाव्यशरीरसश्रितानि वक्ष्यमाणश्लेषादिगुणदशकसमभिव्यञ्जनव्यापाराणि शब्दार्थोपसस्काररूपाणि क्रियारूपाणि लक्षणानीति, तदुक्त तत्रैव—

इति शब्दार्थयोर्येयं सधिर्विदैहभूतयो ।

काव्ये तथा दर्शितानि लक्षणानि विदुर्बुधाः ।। इति

काव्येऽप्यस्ति तथा कश्चित् स्निग्ध स्पर्शोऽर्थशब्दयो ।

य श्लेषादिगुणव्यक्तिदक्ष स्याल्लक्षणस्थित ।। इति,

चेष्टालङ्कारदृष्टान्तविद्वत् ·········।। इति च

अत्र पक्षे कविव्यापारभेदाद् गुणालकारलक्षणविभाग ।

अपरे मन्यन्ते—अभिनेयाना काव्यबन्धाना वक्ष्यमाणस्वरूप च रूपकमनभिदध्यात्, यये स्वभावसामर्थ्याधानाय तावदभ्यासो निर्माणविषयो लक्षण, यस्त्वास्ततपूर्णत्वादौ, क्रमेण तु तथाभूतोऽभिनेयार्थं काव्यबन्धो लक्षणोन्नीत· तेन च लोकोत्तरवृत्तवर्णनयोगात्, तथा हि किञ्चित् प्रबन्धगात गुणालङ्कारनिकारप्रधान, यथा मेघदूताख्य तद्विभूषणम्, एवमन्यदपि, इति ।

'प्रबन्धधर्मा लक्षणानि' इति केचित् ब्रुवते । कवेरभिप्रायविशेषो लक्षणमितीतरे पुनर्मन्यन्ते । केचिद् यथास्थानविशेष यद् गुणालङ्कारयोजन तल्लक्षणमिति । परे त्वभावन्त—अलङ्कारादिनिरपेक्षेणैव निसर्गसुन्दरो योऽभिनेयविशेषः काव्येषु दृश्यते, समहृदयलोकेष्वपि, तत्सौन्दर्यहेतुर्यो धर्म, मुलक्षणः स एव कार्य, काव्यशरीरविशेषरूपो लक्षणम् । उपमादीपकरूपकाणामानन्त्याद् भेदमाहु· । अन्ये तु शब्देन यथेन विग्रह लक्षणमिति ।

सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाच्ञाप्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥२॥
आशी प्रियोक्ति कपट क्षमा च प्राप्तिश्च पश्चात्तपन तथैव ।
अर्थानुवृत्तिर्ह्युपपत्तियुक्ती कार्योऽनुनीति परिदेवन च ॥३॥
षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसम्मितानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥४।

---

भामहेनापि

"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते" (२-७५) इत्यादि। तेन च परमार्थे व्यापार एव लक्षणं, स तु विषयद्वारेण विशेषलक्षणे तु निरूप्यत इति तत्स्वीकृतरसा-दर्शोऽपि लक्षणं, व्यापारोऽपि च तद्विदा तु तदभ्यासपराणां च तथाभूतकाव्यात्मक-विषयावलोकने झटित्येव प्रतिभाति। तदन्यत्रानुमानेन प्रतिभया स्वसंवेदना इत्यनेन प्रयोजनम्। कुशलशिल्पिव्यापारो हि तत्राध्यक्षदृशि भात्येव ।१।२।३।

षट्त्रिंशदिति च नान्यदिति धारणपरं कविहृदयवर्तिनामपराणामपरिसंख्येय-त्वात्। किं तु बाहुल्येन तावदियता लक्ष्यं व्याप्तम्, इयति च कविनावधातव्यमिति संख्यानिरूपणम्।

तथा च मतान्तरेण भरतमुनिरेवान्ययाप्युद्देशलक्षणेन नामान्तरैरपि च व्यवहारं करोति; तत एव पुस्तकेषु भेदो दृश्यते तं च दर्शयिष्यामः। पठितोद्देश-क्रमस्त्वस्मदुपाध्यायपरम्परागतः ॥१—४।

तत्र विभूषणं लक्षयितुमाह अलङ्कारैरिति। भूषणं कटकादिभि विभज्य स्थानदेशकालदशापुरुषादिविभागं विचार्य न्यस्तैर्गुणालङ्कारैर्यदलङ्करणं तद् भूषणं नाम लक्षणं, कविव्यापार, तद्द्वारेण शब्दार्थव्यापारावपि।

एतदुक्तं भवति— इह गुणा अलङ्काराश्च विषया इत्यनेन निबद्धाः काव्यार्थी कृतानामभिधेयानां रसविशेषविषयं विभावादिभाव विदधतु समर्था। तथा हि हास्यरसप्रधाने प्रहसनादौ गुम्फ्योऽपि वक्तरि प्रयोक्तरि श्रोतरि वा गुणविनिवेशितं तु लक्षणं भजत्यलङ्कारश्च। तथा हि पादताडितके श्रोत्रियं श्रोतारमभिप्रेत्य विटस्यापि निर्गुणपुरुषस्यैवोक्तिः "मा मुसलेनापकार्षीः, मा कुसूलाग्निना धाक्षीः" इति शोभां पुष्णाति। अनौचित्यनिबन्धस्तु करुणविप्रलम्भादौ परमरस्य, यथा—

विना प्रियतमेनाद्य विरहानलतापिता ।
दह्येच्चूनस्य विच्छेद किंतु ह्योऽनलतापिता ॥

स्थाने निवेशस्तु यथा—

लीनेव प्रतिबिम्बितेव लिखितेवान्तर्निखातेव च ।
प्रोत्कीर्णेव च वज्रलेपघटितेव" इति। (मालतीमाधवात्)

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥६॥
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रसाध्यते[1] ।
यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते ॥७॥

---

वलदर्पण च कृत, स यत्र प्रधानप्रकृतिर्भवतीत्युक्तम् । त्वचीति प्रहृतमारीचवृत्तान्त इत्युक्तम् । बाणमित्यादिना नत्रैवास्य बहुमान इत्युक्तम् । राक्षसविषये दैववैगुण्यमित्युक्तम । अत्र च यत्र यस्य यद्व्यापारस्तत्र प्राधान्यस्य का कथेति । प्रगुणितमिति बहुतररणसमर्दधुरन्धरतया कुटिलीकृतस्यापि क्षेत्रबहुमाने पुनर्योजनमित्युक्तम् । त्वदनुजवदन इति भेदोपायकृता नीतिसम्पत् परपक्षे च विपर्ययम् । दत्तकर्ण इति तदाकर्णनमात्रमेतत्, न तु हृदये निर्व्याजं तेजोजाज्वल्यमानोऽपि भेद प्रति कोऽप्यस्य बहुमान । अयमिति गम्भीरधीराकृति प्रसन्नश्च शान्त इति । यद्यपि प्रकृते नापि कश्चिच्छोभोऽत एवोक्त सलीलमिति । अत्र चार्थस्यालङ्कारघटनाप्रयासमन्तरेणैव सुन्दरत्व लक्षणकृतमेव ।

ननु साभिप्रायमात्रत्व नामार्थस्य तु गुण ओज इत्युक्तम् । भो भो सहृदया अर्थो जडस्तस्याभिप्राय इति कथ भावावक्तृत्वोऽयो स इति चेत् तद्गोऽर्थस्य गुण इति कथम् ।

अथ वस्त्वन्तराक्षेपकत्वमेव तस्य स गुण इत्युच्यते तद्वस्त्वन्तरमाक्षिप्य वक्त्रभिप्रायरूपमेव; आक्षेपकत्वमपि कविमनीषाव्यापारबलादेव तथाविनिवेशनात् प्रकारान्तरयोगे तथाभावात् । अत एव प्रौढिर्वस्तुनो वक्तृगतैव मन्तव्यं, काममुपचर्यतामित्यल बहुना ।

एतेषा च लक्षणाना सङ्कीर्णत्वेन लक्ष्य दृश्यते बाहुल्यापेक्षया तूदाहरण मन्तव्यम् ॥६॥

अथ शोभा सिद्धैरर्थैरिति । यथा—

मेदश्छेदकृशोदर लघुभवत्युत्थानयोग्य वपु. ।
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्त भयक्रोधयो ॥
उत्कर्ष. स च धन्विना यदिषव. सिध्यन्ति लक्ष्ये चले ।
मिथ्या हि व्यसन वदन्ति मृगयामीदृग्विनोद. कुत. ॥

अत्र पादत्रयेण प्रसिद्धा एवार्था अभ्यसनीयत्वेन शोभमानास्तै समविकल मृगयालक्षणमर्थं कृत्वा अप्रसिद्धोऽनुचितोऽपि सोऽयं उचितो विचित्रश्च निरूपित । न चायमलङ्कार. कश्चिदपि तु कविव्यापारेण य शब्दार्थव्यापारादेवार्थघटनात्मा तत्त्व हृद्य लक्षणमेव । अशोभनोऽप्यर्थोऽमुना नयेन शोभेत इति शोभेयमुक्ता ॥७॥

---

1. KSS , NS. प्रयुज्यते ।

कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः
दोषा न परिचक्ष्यन्ते तज्ज्ञेयं गुणकीर्तनम् ।
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ॥९॥
उत्साहजननैर्वाक्यैः स्पर्धैर्यैरौपम्यसंश्रयैः ।
प्रसिद्धं स्वगुणैश्चैव ज्ञेयं प्रोत्साहनं बुधैः ॥१०॥
यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
यान्ति सिद्धिमनुक्तानि तदुदाहरणं स्मृतम् ॥११॥

---

लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एको हि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥इति।

अथ स्पष्टार्थं ॥९॥

अथ प्रोत्साहनं—उत्साहजननैरिति । औपम्यस्य सम्यगसम्बन्धेऽपि यथेति अनेन यत्नान्वेषणेऽपि तस्य भाव इति दर्शितम् । यथा भट्टेन्दुराजस्य—

हरवृषभ ! तवैव तस्य माता जयति जगत्यसमानभूतिरेका ।
निवसति परमेश्वरोऽपि यस्मिन् सहनतया सगणः सहावरोधः ॥

अप्रस्तुतप्रशंसा यत्र, तद्वैचित्र्यं प्रोत्साहनत्वलक्षणहेतुरेव, केवलं त्वियं यथा लक्ष्मीरिति, स च भवान् मुरारिरित्यादि । इदमन्यत्र प्रियवचनमिति पठितम्—

यत्प्रसन्नेन मनसा पूज्यान्पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥इति॥१०॥

अथोदाहरणं—यत्रैकस्यापीति । यथा—

कर्मादात् किमुतोद्धृतो गिरिरयं यस्य स्पृशेदाशयं
त्रैलोक्यं तपसा जितं यदि मया ! द्रोण्या किमेतावता
सर्वं साध्वथवा श्लाघते विरहक्षामस्य रामस्य चेत्
त्वद्धन्ताङ्कितबालिवक्षरुधिरक्लिन्नाग्रपुङ्खः शरम् ॥

अत्र उदाहृते हि रावणीयदशनपरिघट्टितबालिवक्षःपाटनेन स्वावमाननेऽपमानितं मनसि तदपजयं. तत्कक्षाकक्ष्यपरिग्रहस्यैव चतुरर्णवभ्रमणं पुन. कृपामात्रेण त्याग तत्राप्रतीकार. पुनरभिमानो दर्प इत्यादि गम्यते । अक्षरमहत्त्वेश्च विशेष.—तत्रावमोपादानव्यवच्छेदान्तरस्याने शब्दान्तरोपादानं यथा—हनूमत इति वक्तव्येऽस्य हन्तुरिति, इह तु त्वद्धन्तेति तदीयधिक्कारोदाहरणम् । अन्ये पठन्ति—

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् । इति

दर्शयन्स्तत्समयसाविभिर्यदुक्तं तद्वाक्यमिति स एव फलितोऽर्थः ॥११॥

निरुक्त द्विविध प्रोक्त तथ्य चाऽतथ्यमेव वा ।
सिद्धिप्रसाधित तथ्यमतथ्य चाप्रसाधितम् ॥१२॥

अथ **निरुक्त**—निरुक्त द्विविधमिति । सिद्धिर्लक्षणेन स्वीकार । तथा *प्रसाधित तथ्य, ततोऽन्यदतथ्यम्* । उदाहरण *यथा* ममैव—

वीरोत्सवे सङ्गरसीम्नि मूढ य प्रापयत् सत्पथ कथञ्चित् ।
स चार्जुन सोऽपि च नाम कृष्ण प्रसिद्धिरित्थ वितथैव सर्वा ॥

परस्पर नाम्नोरन्यत्र तथ्यत्व स्वविषये त्वतथ्यतेति । न चायमर्थश्लेष, स हि तुल्यसख्ययो । *यथा* "**गावो व पावनाना**" इति गोशब्दस्य रश्मिषु सुरभिषु चानादित्वेन प्रसिद्धे । इह त्वेकत्रान्यत्वे कृत समय इति । एव पृथक् तथ्यातथ्ययोरुदाहार्यम् । अन्यत्र पाठ —

निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये ।
यदुच्यते तु वचन निरुक्त तदुदाहृतम् ॥

पूर्वं यत्प्रोक्तो वाह्यस्य सवन्धी कश्चिदर्थस्तस्य प्रसिद्धयेऽनवद्यभावस्य वाचक यदुच्यते तेन निरुक्तमितोऽन्यथा निरर्थकमेवात्र वाच्य स्यात् । यथा सत्य स राजा मतिषु रञ्जनादिति ॥१२॥

**अथ गुणानुवाद**—गुणानुवाद इति परिमितस्यापादिनोरुत्कृष्टगुणनयोपमा, तत्कृतो गुणानामुत्सेक । *यथा*—

पालिता द्यौरिवेन्द्रेण त्वया राजन्वसुन्धरा ।

ननूपमेयमलङ्कार, किमत, उक्त ह्यलङ्काराणा वैचित्र्य लक्षणकृतमेव । एत एव शिक्षितैरपि दण्डिप्रभृतिभिर्ये निरूपिता उपमाभेदा, तत्र यो भेदकोऽशा आचिख्यासा*सशयनिर्णयादिरर्थं, स तादृक् पृथगलङ्कारतया गणित* । गणनेऽपि वा समृष्टिसङ्करापत्ति । अर्थमात्र तदिति चेत् तर्हि तदेव लक्षणम् । *यथा* हि राजता विभज्य विचार्यमाणा इत्यमवतिष्ठते—मकुटाद्यलङ्कार, शौर्यादिगुणो, व्यूढोरस्कत्वादिलक्षणसमुदायो राजालङ्कार्यश्च गुणवाश्च लक्षणीयश्च, तथा काव्यमपि । तेन गुणालङ्कारव्यतिरिक्ता सर्वे लक्षणमिति मन्तव्यम् । "**अस्त्युत्तरस्या**" इति हि पूर्वार्धे आख्यान नाम लक्षणम् । नन्वेव सर्वत्र लक्षणयोग, क आक्षेपार्थ, प्रियमेवास्माकमद तत्सर्वमलङ्कारयुक्त काव्यम् । ननु गौर्वाहीक इति रूपकयोगेऽपि, कि न काव्य, दोषपरिवर्जन गुणवत्त्वरसवत्त्वादि वैकल्यादिति चेत् आस्मास्वापादितो दोषस्त्वयैवोन्मूलित इत्यास्ताम् ।

अन्यत्र तु पाठ —

गुणाभिधानैर्विविधैर्विविधार्थप्रयोजितै ।
गुणातिपातो मधुरैर्निष्ठुरैर्वा भवेदिह ॥

गुणानुवादी हीनानामुत्तमैरुपमाकृत: ।
उत्तमार्थविशेषो य स चाप्यतिशय स्मृत. ॥१३॥
बहूना भाष्यमाणानामेकस्यार्थविनिर्णयात् ।
सिद्धोपमानवचन हेतुरित्यभिसंज्ञित ॥१४॥

---

मधुरैर्गौर्वं (गुणै) निष्ठुरैर्वा विविधैरुपमानभूतैरर्थैर्ये प्रयोजिता गुणास्तद-भिधानैरुपलक्षितो गुणातिपात इत्यर्थ ॥१२॥

गुणानुवाद स ज्ञेयो यत्राभेदोपचारत.
गौणी वृत्तिमुपाश्रित्य वस्तुनो रूपमुच्यते ।

अथातिशयः—उत्तमार्थाद्विशिष्ट इति उक्तादप्यर्थाद्विशेषो । यथा भट्टेन्दुराजस्य ।

यावन्त्येव पदान्यलीकविधुरैर्रालीजनै शिक्षिता
तावन्त्येव कृतागसो द्रुततर व्याहृत्य पत्यु, पुर ।
प्रारब्ध परतो यथा मनसिजस्येच्छा तथा वर्तितु
प्रेम्णो मौग्ध्यविभूषितस्य सहज कोऽप्येष कान्त क्रम ॥

अत्रेर्प्यात्मा य प्रेमण्युत्तमेऽर्थस्ततोऽपि विशेष उक्त, प्रतिपद चाभिप्रायोऽस्ति स विवेचनीय । न चेयमतिशयोक्ति समाख्यमात्रत्वात् । सोऽपि वा लक्षणनालङ्कार इति वक्ष्यामः समनन्तरमेव । अन्यत्र तु पठ्यते—

बहून् गुणान् कीर्तयित्वा सामान्यजनसभवान् ।
विशेष कीर्त्यते यत्र ज्ञेय सोऽतिशयो बुधै ॥इति॥१३॥

अथ सहेतु—बहूना भाषणानामिति । बहून् भाष्यमाणाननात्यैकस्या-साधारणस्यार्थस्य निर्णय कर्तव्यत्वेनावसम्य सिद्धस्य प्रमितस्योपमानवचन प्रक्षेप-वचन मम तावदेव प्रतिभासते इति सहेतु । यथा भट्टेन्दुराजस्य—

एके वारिनिधिप्रवेशमपरे लोकान्तरालोकन
केचित्पावकयोगिन निजगदु: क्षीणेऽह्नि चन्द्राचिपाम् ।
मिथ्या चैतदसाक्षिक प्रियसखि ! प्रत्यक्षतीव्रातपो
मन्येऽह पुनरध्वनीनरमणीचेतोऽधिशेते रवि ॥

एकस्येति । एवमसाधारणम् । सिद्धोपमानेति । डुमिञ् प्रक्षेपणे इत्यस्योप-मानम् । अन्यत्र पाठ —

यत्प्रयोजनसामर्थ्याद्वाक्य शिष्टार्थसाधनम् ।
समासोक्त मनोग्राहि स हेतुरिति सज्ञित. ॥इति।

सम्यगस्यते हृदि क्षिप्यते येन स समास उपपत्तिस्तयोक्तम् ॥१४॥

अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
लक्षणसमानकरणात् सारूप्यं तत्तु निर्देश्यम् ॥१५॥
अभूतपूर्वैरन्यार्थैस्तुल्यस्यार्थस्य निर्णयः ।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥१६॥

---

अथ सारूप्यं—अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेनेति । यथा ममैव—

सैन्दूरीकृतसान्द्रकुङ्कुमरसप्रच्छायमालोच्यते
यत्प्राच्यां दिशि वक्रिमास्पदमिदं इन्दुद्वलेह्यं महः ।
तत्तेजो जरठायुता कलयता भाविप्रवासावधि
सन्ध्यामुग्धवधूकपोलफलके कीर्णो नखाग्राङ्कुरः ॥

अत्र यदिति निर्देश्यं परोक्षवस्तु तत्त्वस्यापरिज्ञानात् । अनुकरणेन प्रच्छाय—मात्रेण अपदेश्यमालोच्यमिति लक्षणेन सैन्दूरीकृतेत्यादिना समान सप्रमाणकं करणं दर्शनक्रिया यस्य तादृशे वस्तुनि सारूप्यं लक्षणम् । पौर्णमास्यामपि वक्ररेखेवेन्दोर्भागो लक्ष्यते उदयाचलान्तरितत्वात् सन्ध्यासमये । न चेयमुपमा उपमेयस्याभावादुपमेयमेव हि पूर्वार्धेन लिख्यते । पुस्तकान्तरेषु तु पाठः —

यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि च ॥इति

प्रत्यक्षं वस्तु परोक्षमिव देशकालरूपानुसारेण वर्ण्यते ॥१५॥

अथ मिथ्याध्यवसाय —अभूतपूर्वैरन्यार्थैरिति । अपारमार्थिकैरेवार्थैस्तत्तुल्यस्यावस्तुभूतस्यार्थान्तिरस्य यस्य वक्तृव्यापारे मति निश्चयः सोऽयम् । यथा ममैव—
यो दुर्जनाद्वाञ्छितसिद्धिमीहते स नूनमुत्तारमनि तं सुखैधिनम् ।
जुह्वज्वलाग्नौ विगलार्थमण्डलं प्रसह्य पष्ठ विषयं प्रसाधयेत् ।

*काव्यलक्षणमित्यनेन [काव्येषु लोकविपर्यासवाहूल्यमवश्यं भवतीति दर्शयति ।*

अन्ये तु पठन्ति—

विचारस्यान्यथाभावस्तथा दृष्टादृष्टयोः ।
सन्देहात्कल्प्यते यत्र सविक्षेपो विपर्ययः ॥

विचार्यत इति विचारोऽर्थं अदृष्टमित्यर्थः । सदेहोऽत्र भ्रमः, अन्यथाभावो *विपर्ययः । अथवा संशयोऽपि हि वस्तुनो विपयतत्त्वमन्यथाकारं दर्शयन् विपर्यय* एव ॥१६॥

अथ सिद्धिः—बहूनां च प्रधानानामिति । प्रसिद्धानां मध्ये एकमित्यप्रसिद्धं यन्नाम कीर्त्यते तस्यासाधारणधर्मस्य प्रयोजनस्य सरतये करणं *तत्र निवेदनं यस्य* तादृक् तत्कीर्त्तनं सिद्धिहेतुत्वात्सिद्धिः । यथा—

बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृत सा सिद्धिरिति कीर्त्यते ॥१७॥
गुणैर्बहुभिरेकार्थैं पदैर्यं सम्प्रशस्यते ।
पदोच्चय तु त विद्यान्नानार्थग्रथनात्मकम् ॥१८॥

---

भद्रेश्वर· सुरसरित्स भवानह च
त्रैलोक्यसारमिह सप्रति जीवलोके ।
भद्रेश्वर, सुरवरेषु सरित्सु गङ्गा
त्व पार्थिवेष्वहमतीव सुदु खितेषु ॥

अत्र भवानह चेत्यप्रसिद्ध प्रसिद्धमध्ये उपात्तमसाधारण्यसिद्धि विधत्ते ॥१७॥

अथ पदोच्चय —गुणैर्बहुभिरेकार्थैरिति । एकता एकतात्पर्यार्थनिष्ठैर्बहुभि. शब्दैर्यं वाच्यत्वेन स्वीकृत्य धर्मास्तिकुपलक्षितत्वेनैव यद्वस्तुन प्रशसनम् । कथ, नानार्थग्रथितात्मकमुपलम्भितरूप कृत्वा तत्पदानामुच्चय उत्कर्षेण चय बाहुल्य यत्रेति पदोच्चय ।

अक्षार सहार परिमुदितरत्न त्रिभुवन
निरालोक लोक जननयननिर्माणमफलम् ।
अदर्प कन्दर्प मरणशरण बान्धवजन
जगज्जीर्णारण्य कथमसि विधातु व्यवसित ॥

अत्र ह्यवान्तरावगमकारिणामवान्तरवाक्यरूपाणा पदाना तात्पर्यमभिन्न स्वार्थस्तु भिन्न । पदोच्चये पदशब्दार्थस्तु पादो भाग इति । अन्ये पठन्ति—

पूर्वेण एवार्थ ॥१८॥

अथाक्रन्दना—आत्मभावमुपन्यस्येति । तीव्र. साक्षादवाच्यो योऽर्थस्तस्य पर प्रति सादृश्ययोजनप्रकारैरात्माभिप्राय प्रमुखे दत्त्वा तत्समन्तत· भाषण स्फुटकथन तन्निजभावाविष्करणप्रधानत्वादाक्रन्दो नाम लक्षणम् । यथा ममैव—

किं पान्थ ! त्वरसे विलोकय निशा या ह्यन्मुखी पाण्डुरा
चन्द्र चुम्बितुमीहते प्रकटयन्त्यग्रे मरागा स्थितिम् ।
यद्वा नागरभोगदुर्ललितकैर्न्यस्तापि न ज्ञायते
ग्रामेऽग्राम्यजनोपभोगसुभग निर्व्याजरम्य सुखम् ।

अत्रोत्तरेणार्थेन ग्रामीणो रम्यतमो भोजनशयनादिभोग इति कथ्या मोहप्रायोऽवाच्य आत्माभिप्राय । तदरोचकरोचकत्वमुभय प्रमुखे निधाय निशाकरवृत्तान्तसादृश्येन तीव्र स्वात्मानुराग आविष्कृत. । अन्ये पठन्ति—

रूपकैरुपमाभिर्वा तुल्यार्थैः सुप्रयोजितैः ।
अप्रत्यक्षार्थसस्पर्शस्तुल्यतर्क प्रकीर्तित. ॥

आत्मभावमुपन्यस्य परसादृश्ययुक्तिभि. ।
तीव्रार्थभावण यत् स्यादाक्रन्द स तु कीर्तित ॥१९॥

हृदयस्थस्य भावस्य सुस्पष्टार्थप्रदर्शनम् ।
अन्यापदेशकथनैर्मनोरथ इति स्मृत ॥२०॥

[1]अपृष्टैरथवा पृष्टैर्निर्णय क्रियते तु य ।
आख्यानमिति तज्ज्ञेय लक्षण नाटकाश्रयम् ॥२१॥

प्रथमार्धेन परमादृश्यमुक्तम् । अप्रत्यक्षस्यात्मभावस्य सस्पर्शना ज्ञाप॰ नेत्यर्थ ॥१९॥

अथ मनोरथः—हृदयस्थस्य भावस्येति । यथा—

णिग्गध दुरारोहिं पुत्तअ (मा) पाडलिं समारुह ।
आरूढणिपडिआ के इमि ए ण कआ इह गामो ।
(निर्गन्धदुरारोहा पुत्रक ! पाटली मा समारोह ।
आरूढनिपतिता केऽनया न कृता इह ग्रामे ॥ इति छाया)

अत्र पादपमारोहन्नेव कश्चिद् दुराशयपुश्चलीसगमोत्सुक. वृद्धविदग्धया स्वामिप्रायद्योतनेन प्रबोध्यते, तत्प्रस्तुतमेवान्यदपदिश्य । अत एवाप्रस्तुप्रशसा, सापि चात्रैवान्तर्भूता । नन्वलकारे ह्यलकार्यत्व ह्यमत् इति केय युक्ति, लक्षण तु भवति लक्षणत्वादेव ॥२०॥

अथाख्यान पृष्टैरपृष्टैरपि चेत्यादि । 'प्रश्नपूर्वका यत्र बहवो निर्णीयन्ते यथा—*बाले ! नाथ ! विमुञ्च मानिनि ! इत्यादावुक्तिप्रत्युक्तौ, प्रश्नसदृशैर्वा शक्याशक्यवस्त्वभिधानैर्यत्र* निर्णय । यथा—

रामोऽसौ भुवनेषु विक्रमगुणैर्यात प्रसिद्धि परा ।

इत्युक्ते यदि प्रसिद्ध क्व मया न ज्ञायत इत्याशक्याख्यात—

अस्मद्भाग्यविपर्ययाद्यदि पर देवो न जानाति तम् ।

किं तस्य प्रसिद्धौ निदानमित्याशक्य पुनराख्यात—

वन्दीवैष यशासि इत्यादिना

नाटकाश्रयमित्यनेन भूयो लक्ष्यमाणम्येत्याह । अन्ये पठन्ति—

वाक्यं सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकं ।
लोकप्रसिद्धैर्बहुभि प्रसिद्धिरिति कीर्तिता ॥ स्पष्टम् ॥२१॥

---

१. GOS. पृष्टैरपृष्टैरथवा ।

आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
[1]यत्तु प्रियं पुनर्वाक्यं सा याच्ञा परिकीर्तिता ॥२२॥

कार्येषु विपरीतेषु यदि किञ्चित् प्रवर्तते ।
निवार्यते च कार्यज्ञैः प्रतिषेधः प्रकीर्तितः ॥२३॥

---

अथ याच्ञा आदौ यत्क्रोधजननमिति । प्रथमार्धेन हितं व्याख्यातम् । तेन प्रथम यत्तदात्वे परुषमायत्या च सत्फलं वस्तूच्यते, ततश्च प्रियम् । पुनः शब्दात्ततो हितं पुनः प्रियमित्येव प्रबोध्यस्य प्रबोधनधिया याचनाद्याच्ञा । यथा ममैव—

भूमिः कण्टकिनी, पुरो विटपिनः प्रायो बहूपद्रवा ।
भूयश्चैव दिवाकरो मृगयते सन्ध्याङ्गनासङ्गमम् ।
तद्विश्रम्य जनोऽयमत्र सदने ग्राम्योचितं सेवतां ।
प्रातः पान्थ ! विचार्य चेतसि चिरं स्थातासि गन्तासि वा

पाठान्तरं तु—

हितैः प्रसन्नवचनैर्यत्परस्यानुवर्तनम् ।
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमुदाहृतम् ॥ इति ॥२२॥

अथ प्रतिषेधः—कार्येषु विपरीतेष्विति । यथा अमरुकस्य ।

लग्ना नाशुकपल्लवे, भुजलता न द्वारदेशेऽर्पिता ।
नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठः ।
तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ।

अत्र तृतीयपादेन विपरीतकार्यप्रवृत्तिरुक्ता । आद्यार्धेन कार्यज्ञत्वं नायिकायाः तथापि निवारणं तुर्यपादेनोक्तम् । अन्ये त्वधीयते—

यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते ।
सदृशार्थाभिनिष्पत्त्याः स लेश इति कीर्तितः ॥ इति ॥

वाक्यमिति वाक्यार्थो विधिर्वा निषेधो वा । नदीपूरश्च वर्षासु रोधको दृष्ट इति सदृशाभिधानेनोपायेन निषेधः कृतः ॥२३॥

अथ पृच्छा यत्राकारोद्भवैर्वाक्यैरिति । यथा—

किं भीमाद् गुरुदक्षिणां गुरुमदाद्भीमप्रियः प्राप्तवान् । इत्यादि

अत्राकारेणाभिप्रायसूचकेन वाक्यादिनोद्भूतानि द्योतितशक्तिकानि वाक्यानीति

---

1. GOS. यत्र ।

यात्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिसञ्ज्ञिता ॥२४॥
विद्वान् पूर्वोपलब्धौ यत्समत्वमुपपादयेत् ।
निदर्शनकृतस्तज्ज्ञै स दृष्टान्त इति स्मृत ॥२५॥
अनेकयुक्तिमद्वाक्यमनेकार्थप्रसाधकम् ।
अनेकवाक्यसयुक्त तन्निर्भासनमुच्यते ॥२६॥
अपरिज्ञाततत्त्वार्थं यत्र वाक्य समाप्यते ।
सोऽनेकत्वाद्विचाराणा सशय परिकीर्तित ॥२७॥

---

भाव । यत्र भावरसोपेतैरित्यन्ये प्राच्य पादमधीयते ॥२४॥

अथ दृष्टान्त —विद्वान्पूर्वोपलब्धौ यत्समत्वमिति । यथा ममैव—

हा हालाहललेहने हतमति सोय समुत्कण्ठितो
गाढाङ्गारगरिम्णि चेप जडधीर्देह निविक्षेप्स्यति ।
ग्राम्योऽप्याजगरी गुरु गलगुहा मोहादय धावति
व्याघ्रयेतरसङ्गतानि यदय सार्धं खलै खेलति ॥

यदयमित्यादि कस्य हेतो । हालाहलपानकूटदहलनादिना येन साम्य कृत स दृष्टान्त । न चेयमुपमा, यतो निदर्शनेन प्रत्यक्षीकरणाय साम्य कृत, इतोऽयमेव कर्तुमुद्यत इति, न च रूपक यदेतत्करोति तत इदमस्य भविष्यतीति भिन्नकालत्वात्, तदाह पूर्वोपलब्धौ सत्यामिति ॥२५॥

अथ भासन अनेकयुक्तिमद्वाक्यमिति । यथा "कर्ता द्यूतच्छलाना जतुमय शरणोद्दीपन सोऽभिमानी" (वेणी)—इत्यादि । भास्यते प्रकृत नोधादिर्येन । पाठान्तर—

ईप्सितार्थप्रसिद्ध्यर्थं कीर्त्यन्ते यत्र सूरिभि ।
प्रयोजनान्यनेकानि सा मालेत्यभिसञ्ज्ञिता ॥ इति ॥२६॥

अथ सशय —अपरिज्ञाततत्त्वार्थमित्यादि । यथा—

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मन ।
ता हर्तुं विबुधद्विषोऽपि न च मे शक्त पुरोवर्तिनी
सा चात्यन्तमगोचर नयनयोर्यातेति कोऽय विधि (विक्रमो ४-२)

अत्राद्यो भाग सशयोदाहरण अनन्तरस्तूत्तरस्योदाहरणम् ॥२७॥

अथाशी —यथाशास्त्रार्थसपन्नामित्यादि । यथा—

यत्र शास्त्रार्थसम्पन्नां मनोरथसमुद्भवाम् ।
अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः ॥२८॥

आनो यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
तत् प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् ॥२९॥

---

'पादाग्रस्थितया' (रत्ना-१-१) इत्यादि । सर्वं वचनं न चाशीः, अलङ्कार ? लक्षणं स्तुत्या एव वर्णनीयत्वात् ॥२८॥

अथ प्रियं—आनौ यत्क्रोधजननमिति । यथा—

किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थः
तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या
उन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

अत्र भ्रमति वल्लभेत्यादौ क्रोधजननं हन्त कीर्तिरिति हर्षवृत् । अन्ये पठन्ति—

वाच्यमर्थं परित्यज्य दृष्टयादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादाशु भ्रश स उच्यते ॥ इति ॥

दृष्टिदर्शनं, प्रकृतिमुखरादिवाक्यमिति पूर्वोक्तमित्यर्थः । न चेयं व्याजस्तुतिः, निन्दाभागे स्तुतेरभावात् । पूर्णायास्तु निन्दाया अभावात् । यथा वा—

"प्रयोनस्य सुना" इत्युक्त्वा वमन्तक विप्रतारयितुं राजा वसन्तशब्दमाचष्टे । मर्यादश्च समयः इत्याकर्णने प्रसूनसमय इत्यनादृत्य निवृत्त्यङ्कुरेण हृष्यति विदूषके, समय इतिशब्देनान्यत्र पतनात्प्रणयक्रोधत्वं चेति प्रियवचनम् । प्रियङ्कर इति लोके एतत्सिद्धम् ॥२९॥

अथ कपटं—छलयुक्तत्वेति । व्याजप्रयोगेण अभिसन्धानं वञ्चना । अभिभावकं तिरस्कारकं । छलोक्त्या कथितस्यार्थस्यान्यथाग्रहणम् अपलापो वा कपटं, तस्य सङ्घातो लक्षणम् । कपटो वस्तुक्रमाद्वाच्छत्रोर्वा समुद्भूतः । वस्तुक्रमोद्भूतस्य मालतीमाधवे मकरन्दस्य मालतीवेषधारणं, दैविकस्य नागानन्दे जीमूतवाहनस्य शङ्खचूडच्छलनं, शत्रुकृतस्य तु छलितरामे लवणासुरप्रयुक्तयो राक्षसयोर्मन्थराकैकेय्योर्वेषधारणं, सीताया अन्तर्वत्न्या निर्वासनं च कृतम् । यथा वा कृत्यारावणे प्रथमेऽङ्के सीतावेषधारिण्या शूर्पणखया लक्ष्मणो वञ्चितोऽभिमूनदव "ता सव्वहा अण्ण एव्व दे अणिट्ठं अभिप्पाअं लक्खेमि" इत्यादिना वचनेन । अन्ये पठन्ति—

यत्र सङ्कीर्तयन्दोषं गुणमर्थेन योजयेत् ।
गुणातिपाताद्दोषं वा गर्हणं नाम तद्भवेत् ॥ इति ॥

छलयुक्त्या त्वन्येषामभिसन्धानाभिभावकं कपटम् ।
द्वित्रिप्रयोगयुक्तो विज्ञेयः कपटसद्भावः ॥३०॥

दुर्जनोदाहृतै रूक्षैः सभामध्येऽतिताडितः ।
अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत् ॥३१॥

दृष्ट्वैवावयवं कञ्चिद्भावो यत्रानुमीयते ।
प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम् ॥३२॥

---

तस्त्रिविधमपि वागुपचारसामान्याच्छलमत्र स्वीकृतम् ॥३०॥

अथ क्षमा—दुर्जनोदाहृतैरिति । दुर्जनोक्तैर्वचनैः क्रोधजननैः सभाया ताडितोऽपि यः पुरुषोऽक्रोधनः क्रोधहीनः स एव क्षमावान् । तद्वर्णनोचितः कविव्यापारः क्षमेत्यर्थः । अनेन च यथोचिताभिन्नवृत्तिमत्त्वं सर्वो विभावाद्युचितो निर्वर्त्यमानः काव्यलक्षणत्वेन सूचितः । क्षमा यथा ममैव—

श्रोत्राय दुष्टवचनं प्रति किं न कोपः
क्षोभं करोति हृदये ननु कोप एव ।
मित्रं ममैव तु निजात्मनि योऽपकारं
कृत्वा ममाशुभकलङ्कविधानहेतुः ।

अन्येषां पाठः—

सिद्धान् बहून् प्रधानार्थास्त्यक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥

सिद्धानिति लोकप्रसिद्धान्प्रधानभूतानशब्दार्थानप्यर्थास्त्यक्त्वानादृत्य क्रोधाद्यद्वचनं विशेषेण युक्तं, यथा 'ममाय' परिवादः सुहृत्प्रत्ययः इति स्वात्मनि क्षोभः पुष्पादिकमुररीकृत्यापि ममापुण्यसञ्चयं दुःखोपभोगदानेन शमयति ॥इति॥३१॥

अथ प्राप्तिः—दृष्ट्वैवावयवं कञ्चिदिति । यथा

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥

अत्र पदपङ्क्तिलक्षणमंशं दृष्ट्वाऽनयात्र भवितव्यमिति शकुन्तलायाः सद्भावोऽनुमीयत इति ॥३२॥

अथ पश्चात्तापः—अकार्यं सहसा कृत्वेति । सहसेत्यविचार्य अकार्यं कृत्वा यथा—अङ्गुलिमुद्रकाहृमित इदोषत उत्पन्ना । जम्बुकवत्त्ो भूतभूहि मुव वोहिणो । कार्यमकृत्वा यथा—

मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु इति । शाकुन्तले ।

अन्ये पठन्ति—

